*Trivandrum Sanskrit Series—No. 236*

ORIENTAL RESEARCH INSTITUTE AND
MANUSCRIPTS LIBRARY
UNIVERSITY OF KERALA

# STOTRA SAMĀHĀRA

**[PART II]**

**(Nineteen Stotras)**

*Editor and Publisher*

K. RAGHAVAN PILLAI, B. A. (*Hons.*) *Ph. D.* (*Lond.*)

Director

Oriental Research Institute and Mss. Library

1971/1146



*[Price ~~Rs. 5~~* 5/60

अनन्तशयनसंस्कृतग्रन्थावलिः—२३६

पौरस्त्यभाषागवेषणहस्तलिखितग्रन्थप्रसाधनकार्यालयः

केरलविश्वविद्यालयः

# स्तोत्रसमाहारः - (द्वितीयो भागः)

## (एकोनविंशतिस्तोत्राणि)

प्रसाधकः

डाक्टर्. के. राघवन् पिळ्ळ

पौरस्त्यभाषागवेषणहस्तलिखितग्रन्थप्रसाधनकार्यालयाध्यक्षः

१९७१/११४६

अनन्तशयने वत्समुद्रणालये मुद्रितः }

मूल्यम् रू० ५ 5/60

# INTRODUCTION

It has been our practice since 1955 to publish at least one stotra in each issue of the Sanskrit Journal of the Kerala University Oriental Research Institute and Mss. Library. As several of these stotras are of some literary merit and so deserve to be known better, we have decided to publish these as a compilation so that they might be more easily made available to Sanskrit readers. Accordingly Part I of the Stotrasamāhāra has been published in 1964 as No. 211 of the Trivandrum Sanskrit Series. Now we are bringing out Part II of the Stotrasamāhāra as No. 236 of the Trivandrum Sanskrit Series.

The present volume contains nineteen stotras of which some are of high literary merit.

Coraśailāṣṭakam:— This stotra is in praise of Durgā at Coraśaila (Kaḷḷarkoḍ near Alleppey). It contains eight stanzas and is originally published in the Sanskrit Journal Vol. XIII No. 3 based on a palm—leaf Manuscript No. 18829 (X) of the Library of this Institute.

Sakalajananīstava :— This stotṛa is also in praise of Devī. It contains 38 stanzas in Sikhariṇi metre. This was first published in the issue of the Sanskrit Journal Vol. XIII No. 4, based on Ms. No. 18829 (Z 8) of the Library of this Institute.

Śivastava :— It contains 14 ślokas in praise of Śiva. From 1 to 12, each śloka enumerates the numbers in Sanskrit as एकं, द्वेधा, त्रय etc. while describing the glory of Śiva. The last stanza contains a 'mantra', on Nṛsimha also, namely उग्रं वीरं महाविष्णुं etc. This was originally published in the Sanskrit Journal Vol. XIV No. 1 based on Ms. No. 18829 (Z 2.)

Anantastava :— This short stotra which contains ten ślokas describes the ten incarnations of Viṣṇu. It was originally published in the Sanskrit Journal Vol. XIV No. 2, based on Manusript No. 18829 (L) of .the Library of this Institute.

Ambikāstava :— It consists of 25 ślokas in praise of Devī. This was originally published in the Journal Vol. XIV No. 3, based on Manuscript No. 18001 (F) available in the Library of this Institute.

Pūrṇatrayīśastotram:-This stotrá was composed by Subhadra alias Valiya Ikku Amma Tampurān of Cochin royal

family (M. E. 1019—1096). It is written in praise of Pūrṇatrayīśa, the deity of Trippūṇittura temple. The stotra consists of 46 beautiful stanzas. The edition is based on Manuscript No. 12595 available in the Library of this Institute. It has been published in the Journal Vol. XIV. No. 4.

Nāmaratnanavaratnamālikāstotram:– This stotra was written by one Śaṅkara. It consists of 11 stanzas in praise of Goddess Pārvatī. The stotra was published for the first time in the Sanskrit Journal Vol. XV No. 1, based on Manuscript No. 1219 of the Palace collection of this Institute Library.

Śrīvidyāryāstotram:— It contains 34 stanzas in Āryā metre. Though the name of the stotra seems to be in praise of Śrīvidyā, really it is a stotra of Śrī Subrahmaṇya. This was originally published in the Sanskrit Journal Vol. XV No. 2 based on a palm leaf Manuscript No. 1155 (D) of the Palace Library collection of this Institute.

Gaṇādhipāṣṭakam:— This aṣṭaka is in praise of Gaṇapati as its name indicates. It was originally published in the Sanskrit Journal Vol. XV No. 3 based on Manuscript No. 1155 (A) of the Palace Library collection of this Institute.

Skandadaṇḍakam:— This stotra in praise of Subrhmaṇya of the Harippaḍ temple (Harigītapura) is based on Manuscript No. P. L. 1155 (C) and published for the first time in the Journal Vol. XV No. 4.

Ambāstotram:— This stotra in eighteen stanzas is in praise of Goddess Durga and all the verses begin with "Amba Prasīda". This was originally published in the Sanskrit Journal Vol. XVI No. 1, based on Transcript No. M. T.68 (B) available in the Library of this Institute.

Lakṣmī śatakam:–This stotra in praise of goddess Lakṣmi, the deity of Hastigiri (Karmala in Tamilnad) is written by one Yajñavarāha. The stotra contains one hundred and seven beautiful verses. This was published for the first time in the Sanskrit Journal Vol. XVI No. 2 of this Institute based on a Manuscript No. P. L. 1219 (A).

Navaratnamālikāstotram:— This stotra in 10 stanzas describes the glory of Śrīkṛṣṇa. This was first published in the Sanskrit Journal Vol. XVI No. 3 based on the Manuscript No. 2375 (A) in Grantha Script available in the Library of this Institute.

Annapūrṇāstava:— This is in praise of Goddess Annapūrṇā. It contains 37 beautiful stanzas. This was first

published in the Sanskrit Journal Vol. XVI No. 4, based on Manuscript No. P. L. 1147 (Z) of this Library.

Carcāstava:— The Carcāstava is a hymn on Goddess Gauri. It contains 26 beautiful verses. The stotra was first published in the Sanskrit Journal Vol. XVII No. 1, based on 6 manuscripts available in the Library of this Institute. (For further details see foot-note under the first stanza of the stotra).

Chāyāvimśatih:— In 26 verses, this stotra describes goddess in several aspects. The title of the stotra is intended to mean though Goddess is praised in forms as Ramā, Vāṇī, Kāḷī, etc., She is one and the same, just like the same sun is reflected in different forms in different waters (vide śloka No. 21). The publication is based on the Manuscript No. 20155 and it was first published in the Sanskrit Journal Vol. XVII No. 2.

Srīkṛṣṇamuktakam:— This muktaka is in praise of Srīkṛṣṇa as the title denotes. It describes the glory of Srīkṛṣṇa in 55 stanzas. This was first published in the Sanskrit Journal of this Institute Vol. XVII Nos. 3 and 4, based on Manuscript No. 5819 (D) available in the Library of this Institute.

Gaurīdaśakam:— This stotra in ten stanzas is in praise of Goddess Gauri. This has been originally published in the Sanskrit Journal of this Institute Vol. XVIII No. 1, based on Manuscript No. 20155 available in the Library of this Institute.

Māryaṣṭakam:— This aṣṭaka consisting of ten ślokas in praise of Goddess Kāḷi in her form Mārī. This was published for the first time in the Sanskrit Journal Vol. XVIII Nos. 2 and 3 based on the two manusctipts namely No. 1178 (Z-25) and No. 1680 belonging to the Library of this Institute.

Credit is due to Sri. A: Ramachandra Sastry, Senior Research Officer, Sri. M. Madhavan Unni, Assistant Research Officer, and Sri. E. Easwaran Namboodiri, at present Lecturer in Sanskrit, University of Kerala, in the publication of this work and I thank these officers.

Trivandrum,
12-7-71.

K. Raghavan Pillai.

—o—

## विषयानुक्रमणी

॥ श्री ॥

# *चोरशैलाष्टकम्

नाभौ सन्नतमुन्नतं कुचभरे नानायुधोद्यद्भुजं
सौभाग्यावधिमुग्धवक्त्रकमलं सर्वाभिरामाकृति ।
परिबद्धपयोधि भासुरतरं चोराचलाधीश्वरं
दूरे दुर्गतिजृम्भितानि भवतां धूनोतु दौर्गं महः ॥ १ ॥

व्यामीलन्महिषासुरत्रिकतटीविन्यस्तपादाम्बुजा
श्यामीभूतशशाङ्कबिम्बरचनासम्भाव्यवक्त्राम्बुजा ।
सीमोल्लङ्घनशङ्कया श्रुतिपथे विश्रान्तनेत्राम्बुजा
श्रीमच्चोरगिरीश्वरी गिरिसुता श्रेयांसि पुष्णातु वः ॥ २ ॥

लीलालीनलुलायकण्ठकदलीकाण्डाग्रनालीगल-
त्कीलालद्रवकर्दमद्रुतगतिक्रीडाकृताध्वश्रमा ।
हेलावल्गितहृद्यखड्गलतिकाखात्कारवीरोद्धता
बाला मण्डितचोरशैलगहना मश्नातु वो वैरिणः ॥ ३ ॥

निस्त्रिंशप्रकटत्रुटद्गलगलन्नीरन्ध्ररक्तच्छटा-
विस्तारस्तबकान्तरव्यतिरटद्वेतालमालावृता ।
विष्टभ्याङ्घ्रितलेन माहिषमहादैत्यं मुहुर्मश्नती
पश्चान् मङ्क्षु भवद्द्विषां विशसतात् पाटच्चराद्रीश्वरा ॥ ४ ॥

---

* Based on Ms. No. 18229 x of this Library.

वल्गत्खड्गभुजङ्गफूत्कृतधुतप्रध्वस्तदैत्यायुतं
नृत्यद्दक्षमहालुलायकलहक्रीडत्कृपाणीतलम् ।
तृष्यत्खर्परतिदिव्यवन्दिवदनप्रक्रान्तजैत्रारवं
गर्जद्द्विट्छदभर्जनं भवतु वश्चोराद्र्यमाद्यं महः ॥ ५ ॥

सेवानम्रसुरेन्द्रवीरपृतनामाणिक्यमौलिच्छटा-
खेलोद्धट्टघणद्धणत्कृतमणिक्षोणीमहामण्डपे ।
नानारागमरीचिवीचिविभवप्रोन्निद्रभद्रासने
वीरास्थानवहा मलिम्लुचगिरेर्नाथैव नाथास्तु वः ॥ ६ ॥

आनन्दद्रवदिव्यसिन्धुलहरीवर्षाभिवर्षं दृशा-
मायामी यमिनां मनोभिरनिशालेह्यो नवाद्यो रसः ।
नीरन्ध्राभरणप्रभानिरवधिस्वादु द्रुतं पातु व-
श्चोराद्रेर्मणिदीपधाम जगतां माता महः पातु वः ॥ ७ ॥

धारावर्षि धनं धनप्रणयिनामाराधनीयं परं
वीराणां मरुतां विपत्सु शरणं वाग्वैभवं वाग्मिनाम् ।
धीराणां द्रुतनिर्वृतिः सुकृतिनां नेत्रे सुधास्वादिमा
चोराद्रेर्मणिदीपधाम जगतां माता महः पातु वः ॥ ८ ॥

इति तदिदमष्टकं पुष्टभूषा परं
जगदभिमतश्रियां (व्यधाराधकं ? नव्यधाराधरम्) ।
श्रवणयुगळे मुहुः शीतगीतामृतै-
र्वहतु भुवनेश्वरा चोरशैलेश्वरा ॥ ९ ॥

---

॥ श्री ॥

# ॥ सकलजननीस्तवः ॥

अजानन्तो यान्ति क्षयमवशमन्योन्यकलहै-
रमी मायाग्रन्थौ तव परिलुठन्तः समयिनः ।
जगन्मातर्जन्मज्वरभयतमःकौमुदि ! वयं
नमस्ते कुर्वाणाः शरणमुपयामो भगवतीम् ॥ १ ॥

वचस्तर्कागम्यस्वरसपरमानन्दविभव-
प्रबोधाकाराय द्युतितुलितनीलोत्पलरुचे ।
शिवस्याराध्याय स्तनभरविनम्राय सततं
नमो यस्मैकस्मैचन भवतु मुग्धाय महसे ॥ २ ॥

लुठद्गुञ्जाहारस्तनभरनमन्मध्यलतिका-
मुदग्रस्वेदाम्भःकणगुणितवक्त्राम्बुजरुचिम् ।
शिवं पार्थत्राणप्रवणमृगयाकारकरणं
शिवामन्वग्यान्तीं शबरमहमन्वेमि शबरीम् ॥ ३ ॥

मिथः केशाकेशिप्रथननिधनास्तर्कघटना
बहुश्रद्धाभक्तिप्रवणविषयाश्चाप्तविधयः ।
प्रसीद प्रत्यक्षीभव गिरिसुते ! देहि शरणं
निरालम्बं चेतः परिलुठति वारि प्लवमिव ॥ ४ ॥

---

*Based on Ms. No. 18829 (Z8) of this Library.*

शुनां वा वह्नेर्वा खगपरिषदां वा यदशनं
कदा केन क्वेति क्वचिदपि न कश्चित् कलयति ।
अमुष्मिन् विश्वासं विजहिहि ममाह्वाय वपुषि
प्रपद्येथाश्चेतः ! सकलजननीमेव शरणम् ॥ ५ ॥

अनाद्यन्ताभेदप्रणयरसिकापि प्रणयिनी
शिवस्यासीर्या त्वं परिणयविधौ देवि ! गृहिणी ।
सवित्री भूतानामपि यदुदभूः शैलतनया
तदेतत् संसारप्रणयनमहानाटकमुखम् ॥ ६ ॥

ब्रुवन्त्येके तत्त्वं भगवति ! सदन्ये विदुरसत्
परे मातः ! प्राहुस्तव सदसदन्येऽप्यसदसत् ।
परे नैतत् सर्वं समभिदधते देवि ! सुधिय-
स्तदेतत् त्वन्मायाविलसितमशेषं ननु शिवे ! ॥ ७ ॥

तटित्कोटिज्योतिर्द्युतिदलितषड्ग्रन्थिघटितं
प्रविष्टं स्वाधारे पुनरपि सुधावृष्टिवपुषा ।
किमप्यष्टाविंशत्किरणसकलीभूतमनिशं
भजे धाम श्यामं कुचभरनतं बर्बरकचम् ॥ ८ ॥

चतुष्पत्रान्तःषड्दलपुटभगान्तस्त्रिवलय-
स्फुरद्विद्युद्वह्निद्युमणिनियुताभद्युतिलते ! ।
षडश्रं भित्त्वादौ दशदळमथ द्वादशदळं
कुळाश्रं च त्र्यश्रं गतवति नमस्ते गिरिसुते ! ॥ ९ ॥

कुळं केचित् प्राहुर्वपुरकुळमन्ये तव बुधाः
परे तत्सम्भेदं समभिदधते कौळमपरे ।
चतुर्णामेतेषामुपरि किमपि प्राहुरपरे
महामाये ! तत्त्वं तव कथममी निश्चिनुमहे ॥ १० ॥

षडध्वारण्यानीं प्रळयरविकोटिप्रतिरुचा
रुचा भस्मीकृत्य स्वपदकमलप्रह्वशिरसाम् ।
वितन्वानः शैवं किमपि वपुरिन्दीवररुचिः
कुचाभ्यामासङ्गस्तव पुरुषकारो विजयते ॥ ११ ॥

प्रकाशानन्दाभ्यामविदितचरीं मध्यपदवीं
प्रविश्यैतद् द्वन्द्वं रविशशिसमाख्यं कबलयन् ।
प्रपद्योर्ध्वं नादं लयदहनभस्मीकृतकुळं
प्रसादात् ते जन्तुः शिवमकुळमम्ब ! प्रविशति ॥ १२ ॥

मनुष्यास्तिर्यञ्चो मरुत इति लोकत्रयमिदं
भवाम्भोधौ मग्नं त्रिगुणलहरीकोटिलुळितम् ।
कटाक्षश्चेदत्र क्वचन तव मातः ! करुणया
शरीरी सद्योऽयं व्रजति परमानन्दतनुताम् ॥ १३ ॥

षडाधारावर्तैरपरिमितमन्त्रोर्मिपटलै-
श्चलन्मुद्राफेनैर्बहुविधलसद्दैवतझषैः ।
क्रमस्रोतोभिस्त्वं वहसि परनादामृतनदी-
र्भवानि प्रत्यङ् नः शिवचिदमृताब्धिप्रणयिनी ॥ १४ ॥

महीपाथोवह्निश्वसनवियदात्मेन्दुरविभि-
र्वपुर्भिर्ग्रस्तांशैरपि तव कियानम्ब ! महिमा ।
अमून्यालोक्यन्ते भगवति न कुत्राप्यणुतरा-
मवस्थां प्राप्तानि त्वयि तु परमव्योमवपुषि ॥ १५ ॥

कलां प्रज्ञामाज्ञां समयमनुभूतिं समरसं
गुरुं पारम्पर्यं विनयमुपदेशं शिवपदम् ।
प्रमाणं निर्माणं प्रकृतिमतिभूमिं परगुहां
विधिं विद्यामाहुः सकलजननीमेव मुनयः ॥ १६ ॥

प्रलीने शब्दौघे तदनु रहिते बिन्दुविभवे
ततस्तत्त्वे चाष्टाध्वनि परमुपाधिं त्वधिगते ।
शिवे शाक्ते पर्वण्यपि कलितचिन्मात्रगहनां
स्वसंवित्तिं योगी रसयति शिवाख्यां भगवतीम् ॥ १७ ॥

परानन्दाकारां निरवधिशिवैश्वर्यवपुषं
निराघाटज्ञानप्रकृतिमपरिच्छिन्नकरुणाम् ।
सवित्रीं लोकानां निरतिशयधामास्पदपदां
भवो वा मोक्षो वा भवतु भवतीमेव भजताम् ॥ १८ ॥

जगत् कायं कृत्वा तदपि हृदये तच्च पुरुषे
पुमांसं बिन्दुस्थं तदपि करणाख्ये च गगने ।
तदेतज्ज्ञानाख्ये तदपि च परानन्दगहने
महाव्योमाकारस्त्वदनुभवशीलो विजयते ॥ १९ ॥

विधे विद्ये वेद्ये विविधसमये वीतजनने
विचित्रे विश्वाद्ये विनयसुलभे वेधगुळिके ।
शिवाज्ञे शीलस्थे शिवपदवदान्ये शिवनिधे
शिवे ! मातर्मह्यं त्वयि वितर भक्तिं निरुपमाम् ॥ २० ॥

विधेर्मुण्डं हृत्वा यदकुरुत पात्रं करतले
हरिं शूलप्रोतं यदगमयदंसाभरणताम् ।
अलश्चक्रे कण्ठं यदपि गरलेनाम्ब ! गिरिशः
शिवस्थायाः शक्तेस्तदिदमखिलं ते विलसितम् ॥ २१ ॥

विरिञ्चाख्या मातः ! सृजसि हरिसंज्ञा त्वमवसि
त्रिलोकीं रुद्राख्या हरसि विदधासीश्वरदशाम् ।
भवन्ती सादाख्या शिवयसि च पाशौघदलने
त्वमेवैका नैका भवसि कृतिभेदैर्गिरिसुते ! ॥ २२ ॥

मुनीनां चेतोभिः प्रमृदितकषायैरपि मना-
गशक्ये संस्प्रष्टुं चकितचकितैरम्ब ! सततम् ।
श्रुतीनां मूर्धानः प्रकृतिकठिनाः कोमलतरे
कथं ते विन्दन्ते पदकिसलये पार्वति ! सदा ॥ २३ ॥

पिता माता भ्राता सुहृदनुचरः सद्म गृहिणी
वपुः पुत्रः क्षेत्रं धनमिति यदा मां विजहति ।
तदा मे भिन्दाना सपदि भवमोहान्धतमसं
महाज्योत्स्ना मातर्भव करुणया सन्निधिकरी ॥ २४ ॥

प्रियङ्गुश्यामाङ्गीमरुणतरवासःकिसलयां
समुन्मीलन्मुक्ताफलकुसुमनेपथ्यरुचिराम् ।
स्तनद्वन्द्वस्फारस्तबकनमितां कल्पकलतां
सकृद् ध्यायन्ति त्वां दधति शिवचिन्तामणिपदम् ॥ २५ ॥

तटिद्वल्लीं नित्याममृतसरितं पाररहितां
सदोद्गीर्णज्योत्स्नां प्रकृतिमगुणग्रन्थिघटनाम् ।
गिरां दूरां विद्यामविनतकुचां विश्वजननी-
मपर्यन्तां लक्ष्मीमभिदधति सन्तो भगवतीम् ॥ २६ ॥

शिवस्त्वं शक्तिस्त्वं त्वमसि समयस्त्वं समयिनी
त्वमाज्ञा त्वं सिद्धिस्त्वमयमणिमादिर्गुणगणः ।
अविद्या त्वं विद्या त्वमसि निखिलं किं त्वदपरं
पृथक्तत्त्वं त्वत्तो भगवति न वीक्षामह इमे ॥ २७ ॥

त्वयासौ जानीते रचयति भवत्यैव सकलं
त्वयैवेच्छत्यम्ब ! त्वमसि तनवो ह्यस्य विविधाः ।
गतस्याद्य शम्भुर्भवसि परमव्योम भवती
तथाप्यर्धं भूत्वा विहरसि शिवस्येति किमिदम् ॥ २८ ॥

मयूखाः पूष्णीव ज्वलन इव तद्दीप्तिकणिकाः
पयोधौ कल्लोलप्रातिहतमहिम्नीव पृषताः ।
उदेत्योदेत्याम्ब ! त्वयि सह निजैस्तात्त्विककुलै-
र्भजन्ते कल्पौघाः प्रलयमनुकल्पं परवशात् ॥ २९ ॥

सुता दक्षस्यादौ किल सकलमातस्त्वमुदभू-
स्सदोषान्तं हित्वा तदनु गिरिराजस्य तनया ।
अनाद्यन्ता शम्भोरपृथगपि शक्तिर्भगवती
विवाहाज्जायेतीह हह ! तव को वेत्ति चरितम् ॥ ३० ॥

कणास्त्वद्दीप्तीनां रविशशिकृशानुप्रभृतयः
परब्रह्म क्षुद्रा तव नियतमानन्दकणिका ।
शिवादिक्षित्यन्तं त्रिवलयतनोर्विश्वमुदरे
तवास्ते भक्तस्य स्फुरति हृदि चित्रं भगवती ॥ ३१ ॥

पुरः पश्चादन्तर्बहिरपरिमेयं परिमितं
परं स्थूलं सूक्ष्मं सकळमकळं गुण्यमगुणम् ।
दवीयो नेदीयः सदसदिति विश्वं भगवतीं
सदा पश्यन्नाज्ञां वहति भुवनक्षोभजननीम् ॥ ३२ ॥

प्रविश्य स्वर्गं तं सहजदयया देशिकदृशा
षडध्वध्वान्तौघच्छिदुरगणनातीतकरणाः ।
परामाज्ञां शैवीं सपदि शिवयन्तीमविदितां
स्वमात्मानं धन्याश्चिरमुपलभन्ते भगवतीम् ॥ ३३ ॥

विधिर्विष्णुर्ब्रह्मा प्रकृतिरणुरात्मा दिनकरः
स्वभावो जै(ने)न्द्रस्सुगतमुनिराकाशमनिलः ।
शिवः शक्तिश्चेति श्रुतिविषयतां त्वामुपगतै-
र्विकल्पैरेभिस्त्वामभिदधति सन्तो भगवतीम् ॥ ३४ ॥

शरीरं क्षित्यम्भःप्रकृतिरचितं केवलमचित्
सुखं दुःखं चायं कलयति परं चेतन इति ।
स्फुटं जानानोऽपि प्रभवति न देही रहयितुं
शरीराहङ्कारं तव समयबाह्यो गिरिसुते ! ॥ ३५ ॥

असङ्ख्यैः प्राचीनैर्जननि ! जननैः कर्मविलयात्
कृते जन्मन्यन्ते गुरुवपुषमासाद्य गिरिशम् ।
परामाज्ञां शैवीं क्रमतनुरपि त्वा विदितवान्
नयेयं त्वत्पूजास्तुतिविनमनैरेव दिवसान् ॥ ३६ ॥

भुवि पयसि कृशानौ मारुते खे शशाङ्के
सवितरि यजमानेऽप्यष्टधा शक्तिरेका ।
वहति कुचभराभ्यां या विनम्रापि विश्वं
सकलजननि ! सा त्वं पाहि मामित्यवाच्यम् ॥ ३७ ॥

यत् षट्चक्रं कमलमुदितं तस्य या कर्णिकाख्या
योनिस्तस्याः प्रथितमुदरं यत् तदोङ्कारपीठे ।
तस्याप्यन्तः स्तनभरनतां कुण्डलीतः प्रवृत्तां
श्यामाकारां सकलजननीं सन्ततं साधयामि ॥ ३८ ॥

सकलजननीस्तवः समाप्तः ।

---

॥ श्री ॥

# *शिवस्तवः ।

एकं निष्कळमचलं संसक्तद्वादशान्तमतिशान्तम् ।
ज्योतिर्विज्ञानमयं परात्परं पावनं शिवं वन्दे ॥ १ ॥

द्वेधा शक्त्या युक्तं पुरुषप्रकृतिप्रकारभेदेन ।
अग्नीषोमात्मानं जगत्प्रसूतिं महेश्वरं वन्दे ॥ २ ॥

मूर्तित्रयानुषक्तं ब्रह्मा विष्णुर्महेश्वरश्चेति ।
सृष्टिस्थितिलयहेतुं त्रिगुणात्मानं त्रिलोचनं वन्दे ॥ ३ ॥

वेदचतुष्टयवेद्यं चतुराश्रमवर्णधर्मकर्तारम् ।
चतुरष्टार्धावासं चतुर्भुजं चन्द्रशेखरं वन्दे ॥ ४ ॥

पञ्चमहाभूतमयं पञ्चेन्द्रियशक्तिविषयगुणनिलयम् ।
पञ्चविभक्तात्मानं पञ्चमुखं पार्वतीपतिं वन्दे ॥ ५ ॥

षड्वर्गदुर्गदूरं षट्तर्कवितर्कनिश्चयालक्ष्यम् ।
षट्कर्माङ्गसुनिष्ठं षण्मुखजनकं जगद्गुरुं वन्दे ॥ ६ ॥

सप्तविकाराव्यक्तं सप्ताधिकसप्तविष्टपाधारम् ।
सप्ताश्विकोटिभासं सप्तावलयं पिनाकिनंवन्दे ॥ ७ ॥

---

* *Based on Ms. No. 18229. Z: 2.*

मूर्त्यष्टकोपपन्नं नागाष्टकभूषणं महादेवम् ।
अष्टमलोकेशानां मातृणामष्टकार्चितं वन्दे ॥ ८ ॥

नवशक्तिकृताधारं नवविकसितकाशकुसुमसङ्काशम् ।
नवयौवनोपपन्नं नवग्रहाराधितं हरं वन्दे ॥ ९ ॥

दशमुखनतचरणयुगं दशमुखहव्यहोमसम्प्रीतिम् ।
दशमुखमण्डननमितं दशप्रहारोज्ज्वलं हरं वन्दे ॥ १० ॥

एकादशप्रभेदं रुद्रं शतधा सहस्रधा भूयः ।
संख्यातीतं मूर्त्या मायामयमच्युतं मृडं वन्दे ॥ ११ ॥

द्वादशसङ्ख्यातीतं माहात्म्यं सर्वभूतरमणीयम् ।
निष्कळचिन्त्येशानं सर्वेशं पापनाशनं वन्दे ॥ १२ ॥

करधृतशूलकपालं भसितसिताङ्गं त्रिलोचनं जटिलम् ।
भीषणपितृवननिलयं नीलग्रीवं दिगम्बरं वन्दे ॥ १३ ॥

*उग्रं वीरयुतं महान्वितमथो विष्णुं ज्वलन्तान्वितं
सम्प्रोक्ताथ च सर्वतोमुखनृसिंहाणौस्तथा भीषणम् ।
भद्रं मृत्युयुतं च मृत्युमपि च प्रोक्ता नमाम्या युतं
भूयोऽहपदमुद्धरेन्मनुमिमां मन्त्री समस्तार्थदाम् ॥ १४ ॥

---

* ‘ उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् ।
नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ’’ ॥
इति मन्त्रस्वरूपम् ॥

॥ श्री ॥

# अनन्तस्तवः ।

येनेदं जगदखिलं धृतं विधात्रा
विश्वं यज्जठरगतं युगान्तकाले ।
यो वेदानवति तमेत्य मत्स्यरूपं
तं देवं शरणमहं गतोऽस्म्यनन्तम् ॥ १ ॥

यो लोकानसृजदनाद्यनन्तरूपो
विश्वात्मा विगततमोरजोभिरीड्यः ।
धृत्वेमां कमठवपुर्महीं सृजन्तं
तं देवं शरणमहं गतोऽस्म्यनन्तम् ॥ २ ॥

यः पृथ्वीमसुरभयाद्रसातलस्था-
मुद्धर्तुं खुरनिकरक्षतासुरौघः ।
वाराहीं तनुमभजत् त्रयीनिवास-
स्तं देवं शरणमहं गतोऽस्म्यनन्तम् ॥ ३ ॥

हैरण्यं कुलिशदृढं पुरा नखाग्रै-
र्वक्षो यः सपदि विदारयाञ्चकार ।
प्रह्लादप्रियहितकृन्नृसिंहरूप-
स्तं देवं शरणमहं गतोऽस्म्यनन्तम् ॥ ४ ॥

स्वर्लोकस्थितिकरणाय यो धरित्रीं
त्रेधा विक्रमितुमयाचतासुरेशम् ।
भूत्वा वामनतनुरीश्वरं सुराणां
तं देवं शरणमहं गतोऽस्म्यनन्तम् ॥ ५ ॥

---

Based on Ms. No 18829(L)of this Library.

यः क्षत्रं निहितपरश्वधेन सर्वं
छित्वा तत्क्षतजजलेन कर्म पित्र्यम् ।
चक्रे विक्रमविभवैकसम्पदीड्य-
स्तं देवं शरणमहं गतोऽस्म्यनन्तम् ॥ ६ ॥

यो लोकत्रयवनवह्निमीश्वराणा-
मीशानो दशवदनं रणे निहन्तुम् ।
रामो दाशरथिरभूदुदारवीर्य-
स्तं देवं शरणमहं गतोऽस्म्यनन्तम् ॥ ७ ॥

यः पृथ्वीमसुरभरातिभङ्गुरार्ता-
मुद्धर्तुं मुसलहलायुधो बभूव ।
कालिन्दीकर्षणदर्शितातिवीर्य-
स्तं देवं शरणमहं गतोऽस्म्यनन्तम् ॥ ८ ॥

कंसादींस्त्रिदशरिपूनपाचिकीर्षु-
र्यः पृथ्व्यामिह यदुनन्दनो बभूव ।
बालार्कद्युतिविकसत्सरोजवक्त्रं
तं देवं शरणमहं गतोऽस्म्यनन्तम् ॥ ९ ॥

पाषण्डान् कलिकलुषीकृतस्वधर्मा-
न्निश्शेषं सपदि निराकरिष्णुरीशः ।
यः कल्की भवति नितान्तघोररूपं
तं देवं शरणमहं गतोऽस्म्यनन्तम् ॥ १० ॥

---

॥ श्री ॥

## *अम्बिकास्तवः ।

सौन्दर्यविभ्रमभुवो भुवनाधिपत्य-
सम्पत्तिकल्पतरवस्त्रिपुरे! जयन्ति ।
ये ते कवित्वकुमुदप्रकरा(व)बोध-
पूर्णेन्दवस्त्वयि जगज्जननि! प्रणामाः ॥ १ ॥

देवि! स्तुतिव्यतिकरे कृतबुद्धयस्ते
वाचस्पतिप्रभृतयोऽपि जडीभवन्ति ।
तस्मान्निसर्गजडिमा कतमोऽहमत्र
स्तोत्रं तव त्रिपुरतापनपत्नि! कर्तुम् ॥ २ ॥

मातस्तथापि भवतीं भवतीव्रताप-
विच्छित्तये स्तुतिमहार्णवकर्णधारः ।
स्तोतुं भवानि! भवतीचरणारविन्द-
भक्तिग्रहः किमपि मां मुखरीकरोति ॥ ३ ॥

---

* स्तवोऽयं १८००१ F अङ्काङ्कितात् ग्रन्थादुद्धृतः ।

सूते जगन्ति भवती भवती बिभर्ति
जागर्ति तत्क्षयकृते भवती भवाय ।
मोहं भिनत्ति भवती भवती रुणद्धि
लीलायितं जगति चित्रमिदं भवत्याः ॥ ४ ॥

यस्मिन् मनागभिनवाम्बुजपत्रगौरीं
गौरि! प्रसादमधुरां दृशमादधासि ।
तस्मिन् निरन्तरमनङ्गशरप्रकीर्ण-
सीमन्तिनीनयनसन्ततयः पतन्ति ॥ ५ ॥

पृथ्वीभुजोऽप्युदयनप्रवरस्य यस्य
विद्याधरप्रणतिचुम्बितपादपीठः ।
यश्चक्रवर्तिपदवीप्रणयः स एष
त्वत्पादपङ्कजरजःकणजः प्रसादः ॥ ६ ॥

कल्पद्रुमप्रसवकल्पितचित्रपूजा-
मुद्दीपितप्रियतमामदरक्तगीतम् ।
नित्यं भवानि! भवतीमुपवीणयन्ति
विद्याधराः कनकशैलगुहागृहेषु ॥ ७ ॥

लक्ष्मीवशीकरणकर्मणि कामिनीना-
माकर्षणव्यतिकरेषु च सिद्धमन्त्रः ।
नीरन्ध्रमोहतिमिरच्छिदुरप्रदीपो
देवि! त्वदङ्घ्रिजनितो जयति प्रसादः ॥ ८ ॥

देवि! त्वदङ्घ्रिनखरत्नभुवो मयूखाः
प्रत्युप्तमौक्तिकरुचो मुदमुद्वहन्ति ।
सेवानतिव्यतिकरे सुरसुन्दरीणां
सीमन्तसीम्नि कुसुमस्तबकायितं यैः ॥ ९ ॥

मूर्ध्नि स्फुरत्तुहिनदीधितिकान्तिगौरं
मध्येललाटममरायुधरश्मिचित्रम् ।
हृच्चक्रचुम्बिहुतभुक्कणिकानुरूपं
ज्योतिर्यदेतदिदमम्ब! तव स्वरूपम् ॥ १० ॥

सिन्दूरपांसुपटलस्थगितामिव द्यां
त्वत्तेजसा जतुरसस्नपितामिवोर्वीम् ।
यः पश्यति क्षणमपि त्रिपुरे! विहाय
व्रीलां मृडानि! सुदृशस्तमनुव्रजन्ति ॥ ११ ॥

लक्ष्मीवशीकरणचूर्णसहोदराणि
त्वत्पादपङ्कजरजांसि शिवे! जयन्ति ।
यानि प्रणाममिलितानि ललाटपट्टे
लुम्पन्ति धातृलिखितानि दुरक्षराणि ॥ १२ ॥

मातुर्मुहूर्तमपि यः स्मरति स्वरूपं
लाक्षारसारुणिततन्तुनिभं भवत्याः ।
ध्यायन्त्यनङ्गमनसस्तमनङ्गतप्ताः
प्रद्युम्नसाम्यसुभगत्वगुणं तरुण्यः ॥ १३ ॥

योऽयं चकास्ति गगनार्णवरत्नमिन्दु-
योऽयं चराचरगुरुः पुरुषः प्रधानः ।
यद्धाममर्धमिदमन्तकसूदनस्य
देवि ! त्वमेव तदिति प्रतिपादयन्ति ॥ १४ ॥

रूपं तव स्फुरितचन्द्रमरीचिगौर-
मालोकते शिरसि वागधिदैवतं यः ।
निःसीमसूक्तिरचनामृतनिर्झरिण्य-
स्तस्य प्रसादमधुराः प्रसरन्ति वाचः ॥ १५ ॥

ये चिन्तयन्त्यरुणमण्डलमध्यवर्ति
रूपं तवाम्ब ! नवयावकपङ्कपिङ्गम् ।
तेषां सदैव कुसुमायुधबाणखिन्न-
वक्षस्थला मृगदृशो वशगा भवन्ति ॥ १६ ॥

उत्तप्तहेमरुचिरे त्रिपुरे ! पुनीहि
चेतश्चिरन्तनमघौघवनं लुनीहि ।
कारागृहे निगळबन्धनयन्त्रितस्य
त्वत्संस्मृतौ झटिति मे निगळा गळन्तु ॥ १७ ॥

रुद्राणि ! विद्रुममयीं प्रतिमामिव त्वां
ये चिन्तयन्त्यरुणकान्तिमनङ्गरूपाम् ।
तानेत्य पक्ष्मळदृशः प्रसभं भजन्ते
कण्ठावसक्तमृदुबाहुलता युवत्यः ॥ १८ ॥

इच्छानुरूपगुण............प्रकर्ष-
सङ्कर्षणि त्वमनुसृत्य यदा बिभर्षि ।
जायेत स त्रिभुवनैकगुरुस्तदानीं
देवः शिवोऽपि भुवनत्रयसूत्रधारः ॥ १९ ॥

त्वद्रूपमुल्लसितदाडिमपुष्परक्त-
मुद्भावयन्मदनदैवतमग्रतो यः ।
तं हीनरूपमपि मन्मथनिर्विशेष-
माराधयन्त्युरुनितम्बभरास्तरुण्यः ॥ २० ॥

त्वामैन्दवीमिव कलामनुफालदेश-
मुद्भासिताम्बरतलामवलोकयन्तः ।
सन्तो भवानि! सुधियः कवयो भवन्ति
त्वं भावनाहिताधियां किल कामधेनुः ॥ २१ ॥

आधाय मारुतनिरोधवशेन येषां
सिन्दूररञ्जितसरोजगुणानुसारि ।
तीव्रं हृदि स्फुरति देवि! वपुस्त्वदीयं
धावन्ति तानिह समीहितसिद्धिदार्थाः ॥ २२ ॥

त्वां व्यापिनीति सुमना इति कुण्डलीति
त्वां कामिनीति कमलेति कलावतीति ।
त्वां मालिनीति ललितेत्यपराजितेति
देवि स्तुवन्ति विजयेति जयेत्युमेति ॥ २३ ॥

याचे न कञ्चन न कञ्चन वञ्चयामि
सेवे न कञ्चन निरस्तसमस्तदैन्यः ।
श्लक्ष्णं वसे मधुरमद्मि भजे वरस्त्री-
र्मातर्यदा त्वमसि मे हृदि कामधेनुः ॥ २४ ॥

यः स्तोत्रमेतदनुवासरमम्बिकायाः
श्रेयस्करं पठति वा यदि वा शृणोति ।
तस्यैहिकं फलति राजभिरीड्यतेऽसौ
जायेत स प्रियतमो मदिरेक्षणानाम् ॥

---

# पूर्णत्रयीशस्तोत्रम्* ।

(सुभद्राकृतम् ।)

गणेशवाणीगिरिजामहेश्वरान्
प्रणम्य सर्वान् विबुधोत्तमान् गुरून् ।
प्रवक्तुमिच्छाम्यबलापि सत्कथां
पिपीलिका लङ्घितुमर्णवं यथा ॥ १ ॥

विख्यातायाः पृथिव्यां स्वकृतविविधमृष्टान्नदानादिपुण्यैः
कुञ्ञिप्पिळ्ळाख्यराज्ञ्या जठरभृतसुभद्रासुताहं प्रवक्तुम् ।
उद्युक्ता तेऽवतारान् विश्वरपलमहीदेववर्यस्य शिष्या
ब्रह्मप्राप्त्यै कुयोगिश्रम इव विफलो मास्तु पूर्णत्रयीश! ॥ २ ॥

---

* This stotra was composed by Subhadra *Alias* Valiya Ikku Amma Tampuran of Cochin royal family (M. E. 1019—1096). It is written in praise of Pūrṇatrayīśa, the deity of Tṛppūṇittura temple. Sri. Vaṭakkuṁkūr Raja Raja Varma and Dr. K. Kuññuṇṇi Raja have mentioned this work in their History of Kerala Sanskrit Literature (in Malayalam) and Contribution of Kerala to Sanskrit Literature respectively and they have not noticed it as a published work. The edition is based on a manuscript (No. 12595) available in this Library.

ईक्षाक्षुब्धप्रकृत्या महदपि च ततोऽहं च तस्मादधीशा
देवा भूतेन्द्रियाणीत्यपरिमिळिततत्त्वानि निर्माय भूयः ।
संयोज्यान्योन्यमतान्यथ समनुविशन् यो विराडाविरासीः
स त्वं मां लोकरूपस्मृतिकृदभयदः पाहि पूर्णत्रयीश ! ॥ ३ ॥

बिभ्रद् वाराहरूपं मनुवचनमनुध्यायतः पद्मयोने-
राविर्भूयाब्धितोयाद् द्रुतमवनिमथोद्धृत्य संस्थाप्य च त्वम् ।
निन्दन्तं चानुयान्तं समरभुवि हिरण्याक्षमक्षीणवीर्यं
हत्वा भक्तैः स्तुतो यस्तदनु विधिमुखैः पाहि पूर्णत्रयीश ! ॥४॥

सर्वेषां निर्विशङ्कं निजपदसुलभप्राप्त्युपायं विधातुं
जातस्त्वं देवहूत्यामुरुतरकृपया मातरं मुक्तिमार्गम् ।
सुग्राहं ग्राहयित्वा तदनुमतियुतोऽद्यापि पूर्वोत्तराशां
योऽध्यास्सेऽध्यात्मविद्भिः कपिल इति नुतः पाहि पूर्णत्रयीश! ॥

धर्मक्षेत्रेऽजनिष्ठाः स्वयमथ नरनरायणाख्यानयुक्तो
नीत्वा यो मृत्युगेहं दशशतकवचं चैकवर्मावशिष्टम् ।
आक्षिप्यद्दक्षयज्ञक्षपणहरविरिञ्चादिभिः स्तूयमानः
शान्तात्मा चिन्तनीयस्त्विह कलिसमये पाहि पूर्णत्रयीश ! ॥६॥

मातुर्वाग्वज्रकृत्ताशयविबुधमुनीन्द्रोपदिष्टक्रमानु-
ध्यानैकाग्र्यात्रिलोकीजनपवनगतिस्तम्भकर्त्रे ध्रुवाय ।
गाढप्रीत्यासपत्नक्षितिवलयपतित्वं च योऽध्यात्मनिष्ठां
पश्चादावृत्तिशून्यं परमपदमदाः पाहि पूर्णत्रयीश ! ॥ ७ ॥

अङ्गाद् वेनस्य सम्यङ्मथनत उदितः स्तोतृभिः स्तूयमानः
    पृथ्वीदोहाद् यथेष्टं पृथुरिति भुवने ख्यातवीर्यस्वभावः ।
सख्यं कृत्वा त्वदुक्त्यानतमुखशतयज्ञेन यज्ञाश्वहर्त्रा
    यः सन्मार्गं द्विजानां सदयमुपदिशन् पाहि पूर्णत्रयीश ! ॥८॥

नाभेश्चाभूः सुतो यो विजितशतमखात् स्वीकृतायां जयन्त्यां
    पुत्रान् जन्मत्रयात्ताभयभरतमुखान् सुप्रसिद्धांश्च सिद्धान् ।
उत्पाद्योक्त्वात्मविद्यां सदसि निजसुतेभ्योऽपि भूतोऽवधूत-
    स्वाकारेणाचलायामुरुसुखमचरः पाहि पूर्णत्रयीश ! ॥ ९ ॥

वेश्याकृष्टाशयत्वादपगतनिजधर्मादिकं तत्कुटुम्ब-
    क्षेमार्थं कृत्यभेदार्जितबहुशमलं कश्चनाजामिळाख्यम् ।
त्वन्नामोक्त्यैव विप्रं यमभटपरिघान्मोचयित्वा स्वभृत्यै-
    र्भक्तिं चोत्पादयन् यः प्रकटितकरुणः पाहि पूर्णत्रयीश ! ॥१०॥

प्रह्लादानुग्रहार्थं नरहरिवपुषा स्तम्भतः कम्पयन् क्ष्मां
    सम्भूतः सर्वसंभ्रान्तिदघटघटघोराट्टहासान् विमुञ्चन् ।
क्रुद्धयद्दैत्येन्द्रवक्षः खरतरनखराग्रेण निर्भिद्य तद्र-
    क्तान्त्रस्रग्भूषितो यः सुबहु शुशुभिषे पाहि पूर्णत्रयीश ! ॥११॥

देवस्तोत्रैरशान्तः पदकमलनतं ब्रह्मवाचा कुमारं
    प्रह्लादं वीक्ष्य सद्यो विकसितवदनः सौम्यरूपोऽभवस्त्वम् ।
साम्यात् सर्वत्र काम्यादिषु विगतरतेस्तस्य यथ्योत्तमाङ्गे
    हस्तं न्यस्य प्रशस्तं विविधवरमदाः पाहि पूर्णत्रयीश ! ॥१२॥

ग्राहग्रस्तं गजेन्द्रं करधृतकमलेनार्चयन्तं च भक्त्या
हस्तेनोद्धृत्य चक्रप्रदलितवदनं नक्रमप्याकलय्य ।
यः कारुण्यार्द्रदृष्ट्या गतशुचमकृथाः स्वस्वरूपेण तेनै-
वागाः साकं विकुण्ठं पदमपि च तथा पाहि पूर्णत्रयीश ! ॥१३॥

क्षीराब्धौ मथ्यमाने दितिजदिविषदां हीनसंख्याकसङ्घै-
र्मग्नाद्र्युद्धारणार्थं धृतकमठकठोराकृतिश्चाभवस्त्वम् ।
पृष्ठे योऽतिस्थविष्ठे सुखतरमधृथा लीलया शैलराजं
जातस्तन्मन्थनान्ते पुनरमृतधरः पाहि पूर्णत्रयीश ! ॥ १४ ॥

दैत्येष्वाहृत्य धावत्स्वमृतममलनारीवपुर्धारयंस्तान्
सञ्चारैर्वञ्चयन् यो मृदुतरविलसद्भावहावादियुक्तैः ।
द्वेधा चैतान् निवेश्य त्रिदशदितिसुतान् व्याजतश्चादितेयान्
मोदेनापाययस्त्वं सदयमथ सुधां पाहि पूर्णत्रयीश ! ॥ १५ ॥

प्रीतोऽदित्यां तु जातः कपटवटुतया वामनो नामतस्त्वं
यातोऽभूर्यज्ञवाटे बलिसविधमहो धीरधीरस्वभावः ।
गायंस्तस्यान्वयं यो निरुपमततधर्मज्ञतां चापि भूयो
याच्ञां वृत्त्यै चकर्थ त्रिपदमितभुवं पाहि पूर्णत्रयीश ! ॥ १६ ॥

शुक्रं धिक्कृत्य तुभ्यं कृतवति निजसर्वस्वदानं सतोयं
दैत्ये गात्रप्रवृद्ध्या सकलमपहरन् बन्धनं चास्य कुर्वन् ।
गर्वं चापोह्य यस्तं सुतलसुखसुरेशत्वमोक्षाद्यभीष्टान्
प्रीत्या दत्त्वापि तृप्तिं नहि नहि गतवान् पाहि पूर्णत्रयीश ! ॥

जातो वेदस्य हेतोः पुरुतरमकरस्वच्छरूपेण भूय-
स्तोये नौकां गृहीत्वा द्रमिडनरपतिं तारयन् सङ्कटाद् यः ।
अश्वग्रीवं च विश्वद्रुहमथ विगतग्रीवमाधाय वेदा-
नादाय ब्रह्मणेऽदाः प्रमुदितहृदयः पाहि पूर्णत्रयीश ! ॥ १८ ॥

त्वत्प्रीत्यै द्वादशीपारणनियममहानिष्ठितस्याम्बरीष-
स्याघं कर्तुं च कृत्योद्भवकृदमितकोपिष्ठदुर्वाससं यः ।
चक्रेण भ्रामयित्वा दिशि दिशि निजभृत्यस्य रक्षाविधानाद्
भक्ताधीनत्वविख्यापनमपि कृतवान् पाहि पूर्णत्रयीश !॥ १९ ॥

मूर्तिं कृत्वा चतुर्धा दशरथनृपतेः पुत्रतां प्राप्तवान् यो
देवार्थं ताटकाघ्नः कुशिकसुतमखं पालयित्वा शिलात्वम् ।
गौतम्या मोचयित्वा पुरहरधनुरारोपणप्राप्तदारः
कृत्तक्षत्रघ्नवीर्यः स्वपुरमुपगतः पाहि पूर्णत्रयीश ! ॥ २० ॥

कैकेयीवागधीनं जनकमनुनयन् काननं स्वानुजस्त्री-
युक्तो यातः किराताधिपरचितजटश्चित्रकूटाद्रिवासः ।
तातं श्रुत्वानुजोक्त्या मृतमथ सुखयन् पादुकादानतस्तं
मार्गेऽत्युग्रं विराधं त्वथ जघनिथ यः पाहि पूर्णत्रयीश ! ॥२१॥

नासाच्छेदाद् भगिन्याः कुपितखरमुखानाशुगैर्नाशयन् यो
मारीचं चाशराधीश्वरहृतदयितां मार्गयन् मार्गमध्ये ।
पक्षीन्द्रं वीक्ष्य तस्मै निजपदमददा दग्धकाबन्धकायो
मुक्तिं दत्त्वा शबर्यै पवनसुतनुतः पाहि पूर्णत्रयीश ! ॥ २२ ॥

यः सुग्रीवेण सख्यं तदरिवरवधं चास्य राज्याधिपत्यं
कृत्वा वार्तां प्रियायाः पवनजवचसा ज्ञातवान् साधु सर्वाम् ॥
गत्वाब्धेस्तीरमारादुपगतदशकण्ठानुजाश्लिष्टपादो
बद्ध्वा सेतुं च यातो रजनिचरपुरीं पाहि पूर्णत्रयीश ! ॥२३॥

हत्वा लङ्काधिपं यः सुतसहजभटामात्ययुक्तं च युद्धे
सीतामादाय पूतां ज्वलनपतनतः पुष्पकं चाधिरुह्य ।
राज्यं गत्वा च पूज्यैर्मुनिभिरथ कृतस्नाभिषेकः स्वकीयैः
सार्धं तत्रावसस्त्वं जनमनुरमयन् पाहि पूर्णत्रयीश ! ॥२४॥

हा हन्त ! त्यक्तकान्तस्त्वथ विधिवशतः क्षुद्रशूद्रार्दनादीन्
कृत्वा पुत्रानुगीतस्वचरितमहिमा कालमालोक्य च त्वम् ।
सर्वान् गीर्वाणलोकान् निशिचरनरनारीजनान् वानरादीन्
नीत्वा योगात् स्वधाम द्रुतमतिमुदितः पाहि पूर्णत्रयीश ! ॥२५॥

रामस्यामेयकीर्तेश्चरितमुरुविधं कीर्तितं तत्त्वविद्भि-
र्धन्यैर्वाल्मीकिमुख्यैः श्रवणपठननिध्यानतः सिद्धिदं च ।
षड्भिः संक्षिप्य पद्यैरिह कथितवती शक्तिहीनापि भक्त्या
प्रीत्यै भूयादवद्धप्रचुरमपि तवेदं तु पूर्णत्रयीश ! ॥ २६ ॥

जातो यो रेणुकायां मुदमथ जमदग्नेश्च मातुश्च कुर्वन्
दत्तात्रेयात्तविद्याकृतमदकृतवीर्यात्मजादीन् नरेन्द्रान् ।
निश्शेषं नाशयित्वा शुभमथ विगतक्षात्रियां चापि कृत्वा
चाद्धारं केरळानां प्रसभमकुरुथाः पाहि पूर्णत्रयीश ! ॥ २७ ॥

भूपान् भूभारभूतान् दितिदनुकुलजांशोद्भवान् ब्रह्मवाचा
संहर्तुं शेषयुक्तो यदुषु कृतजनिर्वासुदेवोऽसुरारिः ।
नीतस्तातेन नन्दव्रजमथ सदयं पूतनां पातयन् यो
मुक्तिं भक्तैकलभ्यां ददिथ कुलपते पाहि पूर्णत्रयीश ! ॥ २८ ॥

यो हत्वा कंसभृत्यं शकटमथ तृणावर्तमप्यात्तवात्या-
मूर्तिं मात्रे स्ववक्त्रे निखिलमपि जगद् दर्शयन् विश्वरूपिन् ।
लीलाभिर्गोकुलस्य प्रमदमतितरां वर्धयन् बद्धगात्रो
वृक्षच्छेदेन यक्षद्वयनुतचरणः पाहि पूर्णत्रयीश ! ॥ २९ ॥

वत्सं हत्वा बकाघावपि कमलभवं मायया मोहयन् यो
रामात्मा चामरारिं जघनिथ सहसा सानुगं धेनुकाख्यम् ।
नृत्तेनार्तं च कृत्वा फणिपतिमपिबः पावकं तावकैश्च
स्तोत्रैर्वृत्रारिमुख्यैर्नुतपदकमलः पाहि पूर्णत्रयीश ! ॥ ३० ॥

सर्वालम्बः प्रलम्बं हलधरवपुषा संहरन् वल्लवीनां
हृत्वा वस्त्राणि दत्त्वा द्विजवरसुदृशां सद्गतिं भक्तदानात् ।
वर्षन्तं श्रीमदान्धं हृतमदमकृथा गोत्रशत्रुं धृताद्रि-
र्गोपीनां तापहारी विहृतिभिरपि यः पाहि पूर्णत्रयीश ! ॥ ३१ ॥

नन्दं विन्दन् जलेशाद् युवतिहरणतः शङ्खचूडं सपङ्कं
चोक्षाणं तीक्ष्णशृङ्गं मयसुतमशिवं केशिनं नाशयन् यः ।
साक्रूरः साग्रजः श्रीमधुपुरमगमो माल्यवेषानुलेपैः
स्निग्धां स्त्रीं वर्धयंस्त्वं हृतरजकशिराः पाहि पूर्णत्रयीश ! ॥३२॥

कोदण्डं खण्डयन् यो जघनिथ गजराजं च मल्लांश्च कल्यान्
मञ्चाग्रादञ्चयित्वा भुवमनुजयुतं मातुलं प्रेतभर्त्रे ।
दत्त्वा कृत्वा च पित्रोः पदनतिमकरो राज्यमप्युग्रसेने
विद्यादात्रे च पुत्रं मृतमपि ददिवान् पाहि पूर्णत्रयीश! ॥ ३३ ॥

कुर्वन् सन्तापशान्तिं व्रजपितृसुदृशामुद्धवोक्त्यातिरक्तां
सैरन्ध्रीं प्रीणयित्वा पुनरपि मुचुकुन्देन यः क्षीणपुण्यम् ।
म्लेच्छेशं दाहयित्वा ह्यभयपदमदास्तस्य चाष्टादशोद्य-
द्युद्धे भीतायमानो मगधपतिकृते पाहि पूर्णत्रयीश! ॥ ३४ ॥

श्रीमत्यां द्वारवत्यां सुखमथ निवसन् रुक्मिणीमग्रहीस्त्वं
सामोदं सत्यभामामुदवह उचितां जाम्बवत्या च सार्धम् ।
भद्राकालिन्द्यवन्तीरपि च परिणयन् लक्ष्मणानाग्नजित्यौ
यो हत्वा भूमिपुत्रं बहुयुवतियुतः पाहि पूर्णत्रयीश! ॥ ३५ ॥

युद्धे बाणं च जित्वा नृगसुगतिकरः पौण्ड्रकं काशिराजं
हत्वा तत्त्वं च मित्रग्रहणगमनतो ग्राहयन् गोपनारीः ।
भीमेनामोघवीर्यं मगधकुलपतिं घातयंश्चेदिपं य-
श्चक्रोत्कृत्तोत्तमाङ्गं सुकृतिनमकृथाः पाहि पूर्णत्रयीश! ॥ ३६ ॥

यज्ञं निर्वर्त्य सम्यग् यमसुतविहितं साल्वराजं च सौभं
हत्वा त्वं दन्तवक्त्रं भवनगतकुचेलाय दत्ताखिलर्द्धिः ।
भूभारक्षेपणं यः प्रकुपितकुरुपार्थादियुद्धेन कृत्वा
भीष्मायात्मैक्यदाता ह्यनुदिनमिह मां पाहि पूर्णत्रयीश! ॥

वृद्ध्यर्थं पार्थकीर्तेर्मृतदशतनयान् कस्यचिद् भूसुरस्य
श्रीमद्वैकुण्ठलोकाद् द्रुतमतिसुहृदा सार्धमाहृत्य दत्त्वा ।
कृत्वा सारथ्यदूत्याद्यमितममतया यः पुनः पाण्डवानां
द्वार्वत्यां सर्वमित्रैः सह सुखवसतिः पाहि पूर्णत्रयीश ! ॥ ३९ ॥

योऽन्योन्यं घातयित्वा निजकुलमखिलं विप्रशापापदेशाद्
भक्तोत्तंसोद्धवाय प्रणयपरवशो दत्तवांस्तत्त्वविद्याम् ।
कीर्तिं विस्तार्य च त्वं भुवि निजमनुजाकारमूर्तिं च हित्वा
नित्यानन्दस्वरूपो निजपदमगमः पाहि पूर्णत्रयीश ! ॥ ४० ॥

कृष्णश्लक्ष्णावताराद् प्रभृति निजपदप्राप्तिपर्यन्तलीलाः
प्रातः काले पठेद् यः प्रशमितकरणः सोऽपि वैकुण्ठमीयात् ।
इत्थं व्यासोक्तितोऽहं चरितमकरवं तावकं संग्रहेण
स्तोत्रं भूयान्मदीयं भवभयशमनं त्वत्प्रसादादिहैतत् ॥ ४१ ॥

विप्रात् त्वं संजनिष्यस्यतुलसुकृतिनः शंभलग्राममुख्याद्
विख्यातः कल्किनाम्ना तुरगमुरुजवं योऽधिरुह्यात्तखड्गः ।
दुर्वृत्तान् सर्वमर्त्यान् झटिति पटुतया पोथयित्वा पृथिव्यां
धर्मं संस्थापयिष्यस्यपि विपुलतमं पाहि पूर्णत्रयीश ! ॥ ४२ ॥

वैराजश्रीकुमाराः सुरमुनिनरनारयणव्यासदत्ता
बुद्धो यज्ञश्च धन्वन्तरिपृथुकपिला मोहिनी चर्षभश्च ।
गोविन्दः श्रीनृसिंहः कमठकिटिझषा वामनो जामदग्न्यः
श्रीरामः सीरिकल्कीत्यज ! परमवतारांस्तवैतान् स्मरामि ॥४३॥

सौभद्रमेतद् भवतोऽवतारकथातिसंक्षेपनुतिस्वरूपम् ।
सतां प्रमोदाय सदास्तु पूर्णत्रयीपुराधीश! तव प्रसादात् ॥ ४४ ॥

अनेकागोयुक्तां भवनिगळबद्धां दृढतरं
भवत्पादम्भोजं शरणमुपयातां ह्यभयद! ।
यथा चोरं राजा दमयति च तद्वद् दमय मां
भवग्रन्थिं छिन्धि प्रचुरकरुणालोकविशिखैः ॥ ४५ ॥

अश्रद्धं यदि यस्य कस्य हृदयं व्यासात्मजास्योद्गत-
श्रीमद्भागवतीकथामृतकणस्पृष्टं हि दिष्ट्यापि वा ।
सद्योऽन्तःकरणं तदीयममलं भक्त्यादियुक्तं भवे-
दित्युक्तिं मम चित्तशुद्धिकरणात् सत्यां कुरु त्वं हरे! ॥४६॥

# नामरत्नवरत्नमालिकास्तोत्रम् ।

शङ्करकृतम् ।

(ध्यानश्लोकः)

कालिकातिमिरकुन्तलान्तवनभृङ्गमङ्गलविहारिणीं
चूलिकाशिखरमालिकामलयमल्लिकासुरभिसौरभाम् ।
बालिकाचतुरगण्डमण्डलमनोहराननसरोरुहां
बालिकामखिलनायिकां मनसि भावयामि परदेवताम् ॥

---

दाडिमीकुसुममञ्जरीनिकरसुन्दरे मदनमन्दिरे
यामिनीरमणखण्डमण्डितशिखण्डिके तरलकुण्डले ।
पाशमङ्कुशमुदञ्चितं दधति कोमळे कमललोचने
तावके वपुषि सन्ततं जननि! मामकं भवतु मानसम् ॥ १ ॥

कुन्दसुन्दरमन्दहासविराजिताधरपल्लवा-
मिन्दुबिम्बनिभाननामरविन्दचारुविलोचनाम् ।
चन्दनागरुपङ्करूषिततुङ्गपीनपयोधरां
चन्द्रशेखरवल्लभां प्रणमामि शैलसुतामुमाम् ॥ २ ॥

---

*Note:* *This Stotra is taken from the Ms No 1219 (Palace Library of H. H. The Maharaja of Travancore.)*

हारनूपुरकिरीटकुण्डलविभूषितावयवशोभिनीं
कारणेश्वरमौलिकोटिपरिकल्प्यमानपदपीठिकाम् ।
कालकालफणिपाशबाणधनुरङ्कुशामरुणमेखलां
भालभूतिलकलोचनां मनसि भावयामि परदेवताम् ॥ ३ ॥

गन्धसारघनसारचारुनवनागवल्लिदलवासिनीं
मन्दरागमधुराधराभरणसुन्दराननसुविस्मिताम् ।
मन्थरायतविलोचनाममलबालचन्द्रकृतशेखरी-
मिन्दिरारमणसोदरीं मनसि भावयामि परदेवताम् ॥ ४ ॥

कुण्डलित्रिविधकोणमण्डलविहारिणीं परविकारिषट्-
पुण्डरीकमुखभेदिनीं तरुणचण्डभानुतटिदुज्ज्वलाम् ।
मण्डलेन्दुपरिवाहितामृततरङ्गिणीं तरलशेखरीं
मण्डलान्तमणिदीपिकां मनसि भावयामि परदेवताम् ॥ ५ ॥

भूरिवारिधरकुन्तलीं त्रिफणिबद्धभूमलयपीठिकां
वारिराशिफणिमेखलाभरणवह्निमण्डलशरीरिणीम् ।
हारिगन्धवहकुन्तलान्तघनशेखरीं च परमात्मिकां
चारुचन्द्रविलोचनां मनसि भावयामि परदेवताम् ॥ ६ ॥

वारणाननमयूरवाहमुखदाहवारणपयोधरां
चारणादिसुरसुन्दरीचतुरशेखरीकृतपदाम्बुजाम् ।
कारणाधिपतिपञ्चकप्रकृतिकारणप्रथममातृकां
वारणान्तमुखपारणां मनसि भावयामि परदेवताम् ॥ ७ ॥

आगमप्रणवपीठिकाममलवर्णमङ्गळशरीरिणी-
मागमावयवशोभिनीमखिलवेदसारकृतशेखरीम् ।
मूलमन्त्रमुखमण्डलामुदितनादबिन्दुनवयौवनां
मातृकां त्रिपुरसुन्दरीं मनसि भावयामि परदेवताम् ॥ ८ ॥

पद्मकान्तिपदपाणिपल्लवपयोधराननसरोरुहां
पद्मरागमणिमेखलाभरणनीविशोभितनितम्बिनीम् ।
पद्मसम्भवसदाशिवान्तमयपञ्चवर्णमणिपीठिकां
पद्मिनीं प्रणवरूपिणीं मनसि भावयामि परदेवताम् ॥ ९ ॥

माणिक्यकुण्डलितमौक्तिकवालिकेन
मन्दस्मितेन वदनारुणपङ्कजेन ।
कालान्तदीर्घमणिमङ्गलसूत्रकण्ठी
माता विशालनयना मम सन्निधत्ताम् ॥ १० ॥

नित्यमेव नियमेन पूजको
भक्तिमुक्तिफलसर्वसिद्धये ।
शङ्करेण रचितां सदा जपे-
न्नामरत्ननवरत्नमालिकाम् ॥ ११ ॥

॥ श्री ॥

# श्रीविद्यार्यास्तोत्रम् ॥

कामितकल्पतरुभ्यः कुर्मः प्रणतिं कुमारनामभ्यः ।
कुलगिरिजाकुतुकेभ्यः केभ्यश्चित्केकिराजकेतुभ्यः ॥ १ ॥

अस्तु मनस्तुष्ट्यै मे वस्तु मुनिस्तुत्यमस्तमिततूस्तम् ।
ध्वस्तसमस्तसपत्नं हस्तलसच्छक्ति निस्तुलैश्वर्यम् ॥ २ ॥

एकं प्रशमितशोकं श्रीकण्ठस्याश्रये प्रियं तोकम् ।
आकम्पितरिपुलोकं मा कञ्चन लेखमन्यमविवेकम् ॥ ३ ॥

ईक्षामहे कदाग्रे साक्षाल्लाक्षाझरीसदृक्षाभम् ।
रूक्षासुरकुलशिक्षादीक्षाधरमक्षयोक्षरथभाग्यम् ॥ ४॥

लम्बोदरसहजेभ्यो बिम्बोकेभ्यो ब्रुवे नमोवाकम् ।
बिम्बोपमाधरेभ्यः कम्बोरातङ्कदायिकण्ठेभ्यः ॥ ५ ॥

अर्भकमद्भुतमेकं निर्भरमन्तर्भजामि भव्यार्थम् ।
यो हि गिरीशात्मभवो भजति गिरीशात्मजात्मभवभावम् ॥ ६ ॥

हन्त निरन्तरमन्तः सन्तनु देवं तमापदन्तकरम् ।
किं तपसान्येन फलं चिन्तयतामन्तकान्तकतनूजम् ॥ ७ ॥

---

*This Stotra is taken from the Ms No 1155 (Palace collection)*

राकाशशधरसुषमानीकाशमृदुस्मितार्द्रमुखकमलम् ।
श्रीकान्तभागिनेयं शोकान्तकरं भजेऽहमेकान्तम् ॥ ८ ॥

ईडे हतभवपाशं सुरपृतनेशं कृतासुरविनाशम् ।
उद्धृतराजसदेशं वेशं वेशं वृथै(व) मानेशम् ॥ ९ ॥

मनसा वचसा शिरसा चिन्तय सङ्कीर्तयानम कुमारम् ।
झटिति स विमतान् हत्वा भगवान् कुर्यादभीष्टघटनां ते ॥ १० ॥

हरिहयमुख्यसुराणामरिभयशान्तिप्रदाननिष्णातः ।
गिरितनयात्मभवो मां भरितदयापाङ्गगोचरीकुर्यात् ॥ ११ ॥

अभिमतफलदो देवैरभिनुतमहिमा ममास्तु स कुमारः ।
यस्य शिखी जिष्णुर्भजति प्रकृतित्वमपि च पत्रत्वम् ॥ १२ ॥

स जयति विचित्रचरित्रः शाक्तीकाग्रेसरो महावीरः ।
शंसन्ति यं महान्तः पुत्रे च पतिं च देववाहिन्याः ॥ १३ ॥

अमरनिरामयकन्दं समरपराभूतशक्ररिपुवृन्दम् ।
भ्रमरमिवाध्यरविन्दं श्रमरहितं कुरुत चेतसि स्कन्दम् ॥ १४ ॥

काञ्चन कौतुकलहरीं क्रौञ्चनगच्छेदिनीं पनीपद्ये ।
काञ्चनमणिगणविलसत्काञ्चिकया लाञ्छितामलदुकूलाम् ॥ १५ ॥

अवलोकयेऽन्तरनिशं शिवलोकस्यैकमुज्ज्वलाभरणम् ।
नवलोहितप्रकाशं भवलोपविधाननिपुणमग्निभुवम् ॥ १६ ॥

हरतु रिपूनस्माकं शरवणजो भवतु चेष्टपंघटकः ।
हरतुहिनाचलतनयानिरतिशयप्रेमरत्नसम्पुटकः ॥ १७ ॥

अरुणं निरवधिकरुणं शरणागतरक्षणे सजागरणम् ।
शरणं भजामि तरुणं हरिणाङ्काभरणहार्दपरिणामम् ॥ १८ ॥

ललिते वल्लीमिलिते लीयेमहि महसि बाहुलेयाख्ये ।
एकं यदुपादानीचक्रे प्रकृतीस्तु षडपि जनिकर्तृ ॥ १९ ॥

अरविन्दवैरिवदनं कुरुविन्दमदापहार(पः१वर)रदनम् ।
शरदिन्दीवरनयनं स्मर वृन्दारकविरोधिनिर्मथनम् ॥ २० ॥

हस्ते यस्य सदास्ते शक्तिर्या काचिदप्रतिमशक्तिः ।
भूभृच्छेदनचुञ्चुस्तं चुम्बतु मानसं चिराय मम ॥ २१ ॥

रमणीयाननषट्कं रभसविदीर्णासुरोत्करपृषत्कम् ।
भजतानतभरणोत्कं भगवन्तं कार्तिकेयमपकलकम् ॥ २२ ॥

ईशानात्मजमीडे क्लेशानन्तं नयेत् स मम सर्वान् ।
बन्धूकाभः सायंसन्ध्यासमयो यथातपोद्गारान् ॥ २३ ॥

मन्मथमथनतनूजे मन्मनसो रतिरनारतं भवतु ।
उन्मदखलजनभयदे सन्मतिराजीविनीदिनाधीशे ॥ २४ ॥

सहसा निहतसपत्ना महसां निधयो महामहानन्दाः ।
इह साम्राज्यमखण्डं गुह सानतयो जनाः प्रपद्यन्ते ॥ २५ ॥

अङ्गानम गाङ्गेयं भङ्गाकटभङ्गदायकाङ्गाभम् ।
भृङ्गाभिरामकेशं शृङ्गाराद्वैतचारुमुखचन्द्रम् ॥ २६ ॥

कलये कपालिपुत्रं करुणापात्रं कलापिवरपत्रम् ।
कलिमलदारुलवित्रं कमलसुनेत्रं कलाधरसुवक्त्रम् ॥ २७ ॥

अस्मि निलीये तस्मिन् सुस्मितमुखसारसे सुराभयदे ।
असुरसमूहासुरसप्रस्मरतर्षप्रचण्डभुजभुजगे ॥ २८ ॥

लोकोत्तरमवलोके लोहितरुचि मनसि किमपि तद्धाम ।
शोकोत्तरलोऽपि जनो यत्स्मृतिमात्रेण भवति निर्वृतधीः ॥ २९ ॥

अनुपमसुषमशरीरं भजत कुमारं भवस्य सुकुमारम् ।
दनुजविनाशविहारं जलधिगभीरं जगद्धितविचारम् ॥ ३० ॥

हतविमतावितलेखे निटिलतटश्रीनिरस्तशशिलेखे ।
मम रतिरस्तु विशाखे शमलतमस्समुदयाहिमंमयूखे ॥ ३१ ॥

रे मानस! विसृजेमां सीमां शोकस्य तावदुद्दामाम् ।
कौमारं स्मर चरणं भूमानं भज सुखस्य चामानम् ॥ ३२ ॥

ईशात् पितुरतिशयितं पञ्चमुखात् षण्मुखं नमस्कुर्मः ।
योऽयमधःकुर्वाणो जयतितरां नीलकण्ठमुरगभुजम् ॥ ३३ ॥

महितदयाभरितमतिं विहितनतानन्दममितवीर्यनिधिम् ।
विमथितविमतसमूहं नमत महात्रिपुरसुन्दरीसूनुम् ॥ ३४ ॥

इति श्रीविद्यार्यस्तोत्रं सम्पूर्णम् ।

॥ श्री ॥

# गणाधिपाष्टकम्[$] ।

श्रियमनपायिनीं प्रदिशतु श्रितकल्पतरुः
शिवतनयः शिरोविधृतशीतमयूखशिशुः ।
अविरतकर्णतालजमरुद्गमनागमनै-
रनभिमतं (धुनोति च मुदं) वितनोति च यः ॥ १ ॥

सकलसुरासुरादिशरणीकरणीयपदः
करटिमुखः करोतु करुणाजलधिः कुशलम् ।
प्रबलतरान्तरायतिमिरौघनिराकरण-
प्रसृमरचन्द्रिकायितनिरन्तरदन्तरुचिः ॥ २ ॥

द्विरदमुखो धुनोतु दुरितानि दुरन्तमद-
त्रिदशविरोधियूथकुमुदाकरतिग्मकरः ।
नतशतकोटिपाणिमकुटीतटवज्रमणि-
प्रचुरमरीचिवीचिगुणिताङ्घ्रिनखांशुचयः ॥ ३ ॥

कलुषमपाकरोतु कृपया कलभेन्द्रमुखः
कुलगिरिनन्दिनीकुतुकदोहनसंहननः ।
तुलितसुधाझरस्वकरशीकरशीतलता-
शमितनताशयज्वलदशर्मकृशानुशिखः ॥ ४ ॥

---

$ *This Stotra is taken from Ms. No. 1155 A (Palace collection).*

गजवदनो धिनोतु धियमाधिपयोधिवल-
त्सुजनमनःप्लवायितपदाम्बुरुहोऽविरतम् ।
करटकटाहनिर्गलदनर्गलदानझरी-
परिमललोलुपभ्रमदभ्रमदभ्रमरः ॥ ५ ॥

दिशतु शतक्रतुप्रभृतिनिर्जरतर्जनकृ-
द्दितिजचमूचमूरुमृगराडिभराजमुखः ।
प्रमदमदक्षिणाङ्घ्रिविनिवेशितजीवसमा-
घनकुचकुम्भगाढपरिरम्भणकण्टकितः ॥ ६ ॥

अतुलबलोऽतिवेलमघवन्मतिदर्पहरः
स्फुरदहितापकारिमहिमा वपुषोढविधुः ।
हरतु विनायकः स विनताशयकौतुकदः
कुटिलतरद्विजिह्वकुलकल्पितखेदभरम् ॥ ७ ॥

निजरदशूलपाशनवशालिशिरोरिगदा-
कुवलयमातुलुङ्गकमलेक्षुशरासकरः ।
दधदथ शुण्डया मणिघटं दयितासहितो
वितरतु वाञ्छितं झटिति शक्तिगणाधिपतिः ॥ ८ ॥

पठतु गणाधिपाष्टकमिदं सुजनोऽनुदिनं
कठिनशुचाकुठावलिकठोरकुठारवरम् ।
विमतपराभवोद्धटनिदाघनवीनघनं
विमलवचोविलासकमलाकरबालरविम् ॥ ९ ॥

॥ श्री ॥

# *स्कन्ददण्डकम्

[ हरिगीतपुरेशश्रीसुब्रह्मण्यस्तुतिः । ]

अयि जय जयाम्भोजिनीजानिडिम्भोदयोद्यत्-
कुसुम्भोल्लसत्फुल्लदम्भोपमर्दप्रवीणप्रभाधोरणीपूरिता-
शावकाश ! वरानन्दसान्द्रप्रकाश !

सहैवोत्तरङ्गीभवत्सौहृदावेशमीशानपञ्चाननीपार्वतीवक्त्र-
सञ्चुम्ब्यमानाननाम्भोजषट्क ! द्विषत्कायरक्तौघ-
रज्यत्पृषत्क !

स्वकीयप्रभुद्वादशात्मद्रढीयस्तमप्रेमधामायितद्वादशा-
म्भोजवृन्दिष्ठबंहिष्ठसौन्दर्यधुर्येक्षण ! साधुसंरक्षण !

निजचरणवन्दनासक्तसद्वृन्दभूयस्तरानन्ददायिस्फुर-
न्मन्दहासद्युतिस्यन्ददूरीकृतामन्दकुन्दप्रसूनप्रभा-
कन्दळीसुन्दरत्वाभिमान ! समस्तामरस्तोमसंस्तूयमान !

जगत्याहिताग्न्याहितादित्यपत्याहितप्रौढवक्षःस्थलोद्गच्छ-
दास्रच्छटाधूमळच्छायशक्तिस्फुरत्पाणिपाथोरुह ! भक्त-
मन्दारपृथ्वीरुह !

---

* *This Stotra in praise of Subrahmanya, the deity of Harippad temple, is based on the Ms. No. P. L. 1155 C.*

विहितपरिरम्भवल्लीवपुर्वल्लरीमेळनोल्लासितोरस्तटश्री-
निरस्ताचिरज्योतिराश्लिष्टसन्ध्याम्बुदानोपमाडम्बर !
तप्तजाम्बूनदभ्राजमानाम्बर !

पिञ्छभारप्रभामण्डलीपिण्डिताखण्डलेष्वासनाखण्ड-
रोचिश्शिखण्डिप्रकाण्डोपरिद्योतमान ! पदश्रीहृतश्रीगृह-
व्रातमान !

प्रथितहरिगीतालयालङ्कृते ! कार्त्तिकेयार्तबन्धो ! दया-
पूरसिन्धो ! नमस्ते समस्तेश मां पाहि पाहि प्रसीद
प्रसीद ।

कारुण्याम्बुनिधे ! समस्तसुमनस्सन्तापदानोद्यत-
स्फायद्दर्पभरासुरप्रभुसमूलोन्मूलनैकायन ! ।
बिभ्राणः क्षितिभृद्विभेदनचणां शक्तिं त्वमाग्नेय ! मां
पाहि श्रीहरिगीतपत्तनपते ! देहि श्रियं मे जवात् ॥

॥ श्री ॥

# *अम्बास्तोत्रम् ।

अम्ब प्रसीद वरदा भव दुःखहन्त्री
कामान् ममाशु परिपूरय कामधेनो!
अद्यैव मे रिपुजणा विलयं प्रयान्तु
वीर्यं जयं च विपुलं च यशः प्रदेहि ॥ १ ॥

अम्ब प्रसीद महतीं श्रियमत्र लोके
सर्वातिगां वितरतादितरानपेक्षम् ।
सम्पत्करीं सुखकरीं भवतीमुपास्ते
यस्तस्य दुर्लभमिह त्रिदिवेऽपि नास्ति ॥ २ ॥

अम्ब प्रसीद शतकोटिधरादिदेव-
सम्भाविताङ्घ्रियुगळे! सकलेष्टदात्री ।
यस्मिन् प्रसीदति मनाग् भवती भवानी
धन्यः स एव जगतां च स एव सेव्यः ॥ ३ ॥

अम्ब प्रसीद सकृदम्बुजनाभवक्षः-
क्रीडागृहे! कमलवासिनि हेमवर्णे! ।
सम्पत्तिकल्पलतिके! त्वदपाङ्गरेखां
ब्रह्मादयोऽपि परिगृह्य भवन्ति धन्याः ॥ ४ ॥

---

*This stotra is based on a transcript No. M. T. 68. B.*

अम्ब प्रसीद शशिखण्डविभूषणाङ्क-
भागस्थिते भवनिहान्त्रि मनोन्मनि! त्वम् ।
या भाति विश्वविलयस्थितिसृष्टिकर्त्री
विश्वम्भरात्र महदादिविचित्ररूपा ॥ ५ ॥

अम्ब प्रसीद चतुराननवक्त्रपद्म-
राजीविहारपरिशीलनराजहंसि! ।
दृष्टस्त्वया सदयमत्र भवेत् समर्थो
मूढोऽपि पण्डिततमः स जळोऽपि धीरः ॥ ६ ॥

अम्ब प्रसीद शतमन्युमुखामरात्म-
शक्ते! त्वदङ्घ्रिशरणस्य गृहाङ्कणेषु ।
खेलन्ति सुन्दरदृशो विचरन्ति विप्राः
सीदन्ति भूमिपतयोऽवसरप्रतीक्षाः ॥ ७ ॥

अम्ब प्रसीद चतुरङ्गबलावलेप-
दूरीकृतारिनिवहे! भवतीप्रसादात् ।
दीनोऽप्यनन्यसुलभान् सकलांश्च कामान्
लब्ध्वा चिरं विजयते हि सपुत्रदारः ॥ ८ ॥

अम्ब प्रसीद सहसा मयि पक्षपातात्
कष्टां दशां मम निरीक्ष्य परानपोह्याम् ।
नो चेद्गतिर्जगति नास्ति निरस्तखेदैः
संसेव्यमानचरणाम्बुरुहे! मुनीन्द्रैः ॥ ९ ॥

अम्ब प्रसीद झटिति त्वमुपेक्षसे चेद्
वत्सस्य वाग्विलसितश्रवणाकुला चेत् ।
उत्सङ्गसङ्गिनि शिशौ वचनप्रतीक्षा
स्तन्यं निपीय मुदिते हि सुखाय मातुः ॥ १० ॥

अम्ब प्रसीद दयया त्वरितं भवानि!
जानासि चेद्धृदयशल्यमिहाविषह्यम् ।
नो चेत् कथं नु भवती जगतां शरण्या
भूयाच्चिराय भवतापपरिश्रितानाम् ॥ ११ ॥

अम्ब प्रसीद जय शत्रुगणानिमांस्त्व-
मद्यैव देवि! परिवर्धय कौतुकं मे ।
कोऽयं विलम्ब इह सा क गता दया ते
दीनावनव्रतमिदं च नु किं समाप्तम् ॥ १२ ॥

अम्ब प्रसीद यदि भक्तिविधेयतायाः
साक्षाद् भवानि भवती भवतीह लक्ष्यम् ।
कारुण्यपात्रमिममाकलयन्त्यजस्रं
धन्यं विधातुमखिलस्य जनस्य मान्यम् ॥ १३ ॥

अम्ब प्रसीद नियतं क्रियतां भवत्या
देवारिवर्गवनपावकतां दधत्या ।
अस्य प्रमादविवशस्य मनःप्रसादः
सर्वात्मना यदगतिर्यदनन्यनाथः ॥ १४ ॥

अम्ब प्रसीद मदनुग्रहसत्वरेण
चित्तेन विग्रहवतेव दयाभरेण ।
आलक्ष्य माममृतशीतळया च दृष्ट्या
क्षिप्रं विधेहि परिलम्भितभूरिभाग्यम् ॥ १५ ॥

अम्ब प्रसीद किमनेन विळम्बितेन
कार्या त्वरात्र न विळम्बमपेक्षते हि ।
यद्भागधेयमिह मे सुरलोभनीयं
सर्वात्मना गिरिसुते! त्वदधीनमेव ॥ १६ ॥

अम्ब प्रसीद परमेण समाधिना मा-
मेकान्तभक्तमवधार्य च चण्डिके! त्वम् ।
सौभाग्यसम्पदभिपूरमहालवाल-
मुद्वेलवीर्यपरमं कुरु भूरिभाग्यम् ॥ १७ ॥

इति स्तुवति मारुतौ निहतचण्डमुण्डासुरा
सुरासुरनरोरगाद्यखिललोकधात्री शिवा ।
महामहिषमर्दिनी समवलम्ब्य दिव्यं वपुः
पुरस्समभवत् तदा पुरुषमात्रसाम्राज्यदा ॥ १८ ॥

---

॥ श्री ॥

# *लक्ष्मीशतकम् ।

[ यज्ञवराहकृतम् ]

आनन्दं दिशतु श्रीहस्तिगिरौ स्वस्तिदा सदा मह्यम् ।
या कौतुकं विधत्ते साकूतेनावलोकनेन हरेः ॥ १ ॥

यन्नाम कीर्तनीयं श्रीरित्यादौ प्रियं हरेर्नाम्नाम् ।
(सा) मे समस्तजननी सन्ततमुदयाय भूयसे भूयात् ॥ २ ॥

श्रीवरदेश्वरदयिते वाञ्छामि त्वां यथामति स्तोतुम् ।
स्वल्पोऽपि डिम्भजल्पो मातुः प्रीतिं कथं न सञ्जनयेत् ॥ ३ ॥

मुररिपुमोहनधाम्ने मूर्तिविनिर्धूतविष्फुरद्धेम्ने ।
दिविषदमेयविभूम्ने लक्ष्मीनाम्ने परं नमो भूम्ने ॥ ४ ॥

करिगिरिनायककान्ते दान्तजनस्वान्तपङ्कजनिशान्ते ।
मयि भवमरणाश्रान्ते करुणां शरणागते कुरु प्रगुणाम् ॥ ५ ॥

वाचामकृत्रिमाणामपि मुनिमनसामगोचरे देवि! ।
त्वद्वर्णने मदीयां काङ्क्षां सफलां करोतु ते करुणा ॥ ६ ॥

भास्वद्विधुबिम्बास्ये मङ्गलसौम्याकृते गुरुश्रोणि! ।
भृगुनन्दिनि मन्दगते रोमलताहे जयाब्धिकुलकेतो! ॥ ७ ॥

धन्यं प्रसूनगर्भं धम्मिल्लं देवि तावकं मन्ये ।
प्रसवशरेण न्यस्तं तूणं बाणौघपूर्णमर्णवजे ॥ ८ ॥

---

* *This stotra in praise of Goddess Lakṣmī, the Deity of "Hastigiri", is based on the Ms. No. P. L. 1219A.*

त्वत्केशपाशशोभापरिमोषाणां फलं पयोदानाम् ।
देवि तटिद्गुणबन्धो नोदनमनिलैः पलायनं दिक्षु ॥ ९ ॥

निन्दति नीरधिकन्ये! कचनिचयस्ते कलापिनं कान्त्या ।
असूयति बर्हं न कथं भुजङ्गवृत्तिश्च पक्षपाती च ॥ १० ॥

जयतु विपक्षं पद्मे! बर्हिणबर्हं त्वदीयकेशभरम् ।
त्वत्कान्तस्य सपक्षं घनमपि कान्त्या कथं पराकुरुते ॥ ११ ॥

बर्हं विगर्हिताभं शस्तेनानेन केशहस्तेन ।
मत्वाभवन्मयूरा मन्दाशा जीविते धृतविषाशाः ॥ १२ ॥

दिव्यामम्बुधिकन्ये! दृष्ट्वा केशश्रियं तवाम्भोदाः ।
आरुह्याद्रिश्रेष्ठं कुरुते त्रपयेव जीवनत्यागम् ॥ १३ ॥

सिन्दूरसुन्दरी ते पद्मे! सीमन्तपद्धतिर्भाति ।
वर्षावलाहकस्था विद्युल्लेखेव वीतचाञ्चल्या ॥ १४ ॥

वेणीमम्बुधिकन्ये! भृङ्गश्रेणीमिव स्फुरन्तीं ते ।
शम्बरवैरिकृपाणीं शङ्के मानापहारिणीं शौरेः ॥ १५ ॥

फालेनाभिमुखेन प्रतिमाकांक्षी तवेन्दुरम्बुधिजे! ।
अर्धाकृतिः कलाभिः पूर्णो भवति क्रियासमभिहारात् ॥ १६ ॥

कर्णावतंसलक्ष्मीं कलयति कमले! विशालदृष्टिस्ते ।
नीलोत्पलस्य कृत्यं किमिति श्रुतिमूलशालिनी चिन्त्यम् ॥ १७ ॥

बन्दीकृतं कटाक्षैरिन्दीवरमेतदिन्दिरे! श्रवसि ।
न्यस्तं पुनः पुनस्तच्चित्यं शङ्कीव वीक्षते चक्षुः ॥ १८ ॥

नयनमुदञ्चत्करुणं नानाभृङ्गारमङ्गलाकारम् ।
देवि त्वदाश्रितानां कर्णमतिक्रम्य काङ्क्षितं दत्ते ॥ १९ ॥

कल्लोलिनीशकन्ये! त्वल्लोचनकान्तिलिप्सया किं वा ।
द्विजराजपादसेवां जीवञ्जीवः करोति सर्वोऽपि ॥ २० ॥

स्फुरति तव श्रुत्यन्ते पतिरिति यत् प्राहुरम्ब! वेदविदः ।
श्रुत्यन्तमेति त(त्ते) दृष्टिः कान्तावलोकना(सक्ता) ॥ २१ ॥

उल्लङ्घितश्रुतीनामुदधिसुते! शोभनं नहीति मृषा ।
येन तवेदं व्यक्तं श्रुतिपथमुल्ल(ङ्घ्य) शोभनं नयनम् ॥ २२ ॥

श्रुत्यन्ते कृतवसतिः पाद्मरुचिं ते प्रकाशयन्त्यब्जे! ।
परमार्गदृष्टिसृष्ट(ां) दृष्टिरियं वैष्णवीं च दूषयति ॥ २३ ॥

देवि! निमित्तगुणस्य क्वापि न दृष्टं हि कार्यसङ्क्रमणम् ।
अनृतमितीदं वचनं यत्त्वदपाङ्गादनङ्गसद्भावः ॥ २४ ॥

आद्यावतारशोभामङ्गीकुर्वाणमात्मनाथस्य ।
निरुपमसुषमं को वा चक्षुस्तव देवि! दक्षिणः स्तोतुम् ॥ २५ ॥

असृजत् कमलं धाता तुलनां देवीक्षणस्य ते वाञ्छन् ।
असदृशभावादमुना नाम प्राप्तं जलजमित्युचितम् ॥ २६ ॥

लोकजनन्यतिभास्वल्लोचनशफरीविराजमानं ते ।
कान्त नासावंशं केतुं मदनस्य के न शंसन्ति ॥ २७ ॥

त्वन्नासिकात्तगन्धस्तपयेवाधोमुखस्तिलप्रसवः ।
मुहुरश्रूणि प्रायो मुञ्चति मातर्मरन्दबिन्दुमिषात् ॥ २८ ॥

नासामौक्तिकमेतन्मन्ये वाराशिकन्यके! धन्यम् ।
तव मुख(ता)राधिपतेः कामादकं कलत्रमङ्गगतम् ॥ २९ ॥

मुक्तोत्पत्तिस्थानं सरसिजमिति यत् समस्तकविसिद्धम् ।
तद्व्यक्तीकरणं ते नासामुक्ताफलस्य देवि! फलम् ॥ ३० ॥

परिभूतकुन्दकुसुमं भासा नासाग्रभास्वरं पद्मे ! ।
मुक्ताफलं मुरारेर्मोहनगुटिकेव मान्मथी भाति ॥ ३१ ॥

भासा विराजमानं नासामुक्ताफलं मम स्फुरति ।
अम्ब ! तवाननपद्मे स्मितरुचिहंसीप्रसूतमण्डमिव ॥ ३२ ॥

दुर्वृत्तः खलु लोके कमले ! कुर्यात् सतां तिरस्कारम् ।
नित्यसुवृत्तेन कथं नासामणिना सतां तिरस्कारः ॥ ३३ ॥

कर्णेन तेऽब्धिकन्ये ! ताटङ्कादेः प्रतीयते शोभा ।
कर्णस्य हि स्वभावः श्रीमन्तं यत् स्वमाश्रयं कुरुते ॥ ३४ ॥

तर्कों ममाब्धिकन्ये ! हाटकताटङ्कचक्रमर्क इति ।
यद्येतदेष न स्याद् कर्णासक्तिः कथं भवेदस्य ॥ ३५ ॥

भाति कपोलः कमले ! पत्युः शृङ्गारमणिमयादर्शः ।
प्रतिफलिततन्मुखोऽयं ह्रद इव सोऽधोविकस्वराम्बुरुहः ॥ ३६ ॥

मधुरवचोगणनायां मातस्त्वद्गीरभूदियं प्रथमा ।
नैव द्वितीयवार्ता कोकिल(वा)दे कुतो नु पञ्चमता ॥ ३७ ॥

साम्याभिलाषदोषं सम्माष्टुं त्वद्गिरा चिरादिक्षोः ।
चक्रे पञ्चशरस्तं चापानमनापदेशतः प्रणतम् ॥ ३८ ॥

अर्णवकन्ये ! धन्यामाकर्णयतस्त्वदीरितां वाचम् ।
शुकपिकवचनश्रवणं श्रुतिपुटकटु देवि ! कस्य वा न भवेत् ॥ ३९ ॥

कस्य गिरस्ते श्रोतुः कमले वदनारविन्दकन्दलिताः ।
न भवेन्महती प्रीतिर्नारदमेकं विना मुनीशानम् ॥ ४० ॥

मकरन्दाः सूनरसाः शुकपिकवाचोऽपि विस्वरा येन ।
वीणाः परिवादिन्यस्तेन किलाब्जे ! तवोपमा न गिराम् ॥ ४१ ॥

अम्बाभिजातवाणीघनरसमाधुर्यचौर्यकारी ते ।
अतिमर्दनासहिष्णुर्मुषितरसानेष मुञ्चतीक्षुः ॥ ४२ ॥

नीरतयेव मरन्दो भाव्यश्रवणे तवाब्धिजे! वाचाम् ।
स्वादित एव सुधायाः स्वाद्येति ख्यातिरपि न माधुर्यात् ॥ ४३ ॥

अधरेण बन्धुजीवं मुखतः प्राभातिकं च राजीवम् ।
दूरीकरोषि किं वा देवि! त्वं सर्वजीवकरुणार्द्रा ॥ ४४ ॥

अन्ते वसन् द्विजानामवदातानामतिस्फुरद्रूपः ।
अम्ब! तवाधिकमधरो बिम्बप्रतिबिम्बयोग्योऽभूत् ॥ ४५ ॥

सन्ततपल्लवयोगे मुक्तिर्न शुचेरपीति वाङ् मिथ्या ।
देवि! तवाधरपल्लवसंयोगेऽप्यमला द्विजा मुक्ताः ॥ ४६ ॥

तव तटिनीपतिकन्ये! द्विजपटली वदनशुक्तिमुक्ताश्रीः ।
अतनुयशोबीजानामङ्कुरपङ्क्तिः परिस्फुरन्ती(व) ॥ ४७ ॥

वदनं सुधाकरस्ते वारिधिकन्ये! न तत्र सन्देहः ।
वचनापदेशमेतन्नो चेदमृतं कथं ततः प्रभवेत् ॥ ४८ ॥

भ्रूयुगळं भृगुतनये! कुसुमशरस्येव सव्यसाचितया ।
आरोपिताक्षिबाणं कोदण्डद्वन्द्वमिति मतिं दत्ते ॥ ४९ ॥

अब्जद्वयमपि विजितं तव कमले! वक्त्रशोभया तत्र ।
अम्बरमेकं शरणं शम्बरमपरं च सत्वरं प्रापत् ॥ ५० ॥

चन्द्रोऽभवद् विषादी चारु मुखं देवि! तावकं वीक्ष्य ।
कुक्षिगतं गरमस्य प्राहुः पङ्कं कळङ्कमित्येके ॥ ५१ ॥

विजितस्त्वन्मुखकान्त्या देवि! निराशो निशाकरो जीवे ।
भृगुपतनं कुरुतेऽसावस्तमथ व्याजतोऽन्वहं तूर्णम् ॥ ५२ ॥

अम्ब! यतस्ते नितरामाननकान्त्या तृणीकृतश्चन्द्रः ।
आतः किल तृणबुद्ध्या मुञ्चति नैनं मृगः कदाचिदपि ॥ ५३ ॥

देवि! तवाननतुलनामभिलषतां सागसां सरोजानाम् ।
मज्जनमप्सु च बन्धः शैवलपाशेन षट्पदैः प्रसृतिः ॥ ५४ ॥

द्विजराजस्याप्यब्जे! त्वद्वक्त्रेणोपमानरहितेन ।
समताभिलाषदोषाद्दोषाकरता विधोर्दुरन्ताभूत् ॥ ५५ ॥

पद्मे! परस्वहरणं दोषायेति प्रभाषणं मिथ्या ।
अपहृत्य राजलक्ष्मीमप(दो)षं यद्विभाति ते वक्त्रम् ॥ ५६ ॥

निर्जित्य नीरजातं निखिलं मुरवैरिसुन्दरि! मुखेन ।
आसनमाकलितं ते नूनं पद्मासनासि तेनैव ॥ ५७ ॥

त्वद्वदनाभिभवोद्यत्तापातिशयं दिवानिशं पद्मम् ।
अम्भसि वासं कुरुते नूनं तस्यापनोदनायाब्जे! ॥ ५८ ॥

सन्ततमित्रविरोधी दोषासक्तः कलङ्कवानिन्दुः ।
तव वदनेन कथं वा कमले! कल्याणगुणभुवा तुल्यः ॥ ५९ ॥

देवि! तवाननचन्द्रप्रसादभिक्षाटनेन राजापि ।
पूर्णश्चन्द्रिकयाहो जीवञ्जीवस्य तृप्तिमातनुते ॥ ६० ॥

त्वत्कण्ठकान्तिभाग्यं दृष्ट्वा शङ्खास्सहस्रशो देवि! ।
तल्लाभाय पयोधेरन्तं गत्वा चिरं तपस्यन्ति ॥ ६१ ॥

कण्ठेन ते हृतश्रीः कमले! विमलोऽपि सन्ततं कम्बुः ।
घुमुघुमुनिनदव्याजात् क्रोशति राज्ञां पुरः समयदर्शी ॥ ६२ ॥

त्वत्कण्ठकान्तिजनितं मज्जनमाख्यातुमुद्यता जलजाः ।
विस्मृतजनशब्दतया पद्मिन्याम्रेडयन्ति मं ममिति ॥ ६३ ॥

कम्बुभ्रमेण कण्ठं चक्रभ्रान्त्या नितम्बबिम्बमपि ।
परिमृशति ते कराभ्यां पतिरतिदुर्भेदशङ्खचक्राभ्याम् ॥ ६४ ॥

बाहू शिरीषमालामार्दवकीर्तीन्दुमर्दने राहू ।
सेतू समग्रशोभासिन्धोर्मन्ये समुद्रकन्ये! ते ॥ ६५ ॥

अतिसुरभिः करपद्मो वाञ्छितदानैर्न केवलं गन्धैः ।
वारिधिपुत्रि! वदान्यं कविमुक्तं देवि! कल्पयातनुते ॥ ६६ ॥

देवि! करेण भवत्या दत्तसमस्तेप्सितेन भक्तानाम् ।
स्पर्शनदूरीकरणं सोदरगीर्वाणशाखिनामुचितम् ॥ ६७ ॥

देवि! तवाननभासा परिभूतः पर्वचन्द्रमा नूनम् ।
तेन हि शश्वत् परिधिव्याजप्राकारमध्यमध्यास्ते ॥ ६८ ॥

पद्मकुलं परिभूतं पद्मे! त्वत्पाणिपद्मरागेण ।
तत्प्रेषितं सदैकं त्वत्पाणिं सेवते सरोजातम् ॥ ६९ ॥

अनुदिनमर्काभिमुखं वनभुवि शैवालवल्कलं कमलम् ।
तप्त्वा तपोऽतितीव्रं प्रापत् त्वत्पाणिपद्मसाधर्म्यम् ॥ ७० ॥

हारा विभान्ति गौरा हरिदयिते! ते मुखोडुराजस्य ।
सेवार्थमागतानां ताराणामिव गणाः पुरोगाणाम् ॥ ७१ ॥

हारलता तव पद्मे! सुकुमारस्याङ्गभूकुमारस्य ।
क्रीडामृणाळडोळाशङ्कां नाङ्कूरयत्यसौ कस्य ॥ ७२ ॥

तव कुचगिरितटवासी कृतरोमाळीनकन्यकास्नानः ।
कश्चन मुक्ताहारो योगीवाभाति नित्यशुद्धात्मा ॥ ७३ ॥

उन्नतिमुरोजयुग्मे! पद्मे दृष्ट्वैव पर्वतास्त्रपया ।
उदधौ चिरं निलीना भीत्या शक्रादिति प्रथामात्रम् ॥ ७४ ॥

तव कुचकुम्भद्वन्द्वे बद्धस्पर्धानि डाडिमफलानि ।
तुलनाहीनाः कीरास्तुण्डैरेतानि खण्डयन्त्यम्बे ! ॥ ७५ ॥

कोदण्डस्य पुरारेरुद्दण्डस्यापि हन्त बाणस्य ।
कबलीकुरुते मानं युगली कुचयोस्तवेन्दिरे ! युगपत् ॥ ७६ ॥

सन्ततमुक्ताहारावपि तव पीनौ पयोधरौ भातः ।
तेन कथं पीनत्वं देवि ! भवेद्रात्रिभोजने मानम् ॥ ७७ ॥

कनकमहीध्रगौरवकबलीकरणादिवातिपीनमपि ।
मुक्ताहारवदास्ते स्तनयुगलं देवि ! तावकं चित्रम् ॥ ७८ ॥

इति किल दर्शनरीतिः कार्यमुपादानकारणाभिन्नम् ।
देवि ! तव स्तनकुम्भौ चक्राभिन्नौ कथं न दृश्येते ॥ ७९ ॥

कलयति दण्डः कलशं सर्वैर्बहुशः श्रुतं च दृष्टं च ।
जननि ! तव स्तनकलशो जनयति मधुवैरिमानदण्डमहो ! ॥ ८० ॥

सर्वारीणां जेता दुर्वारेणैव देवि ! चक्रेण ।
हन्त कथं ते विजितः कान्तो वक्षोरुहात्मचक्रेण ॥ ८१ ॥

कल्लोलिनीशकन्ये ! कलये रोमावलिप्रभेदेन ।
तव कान्तिवार्धिमध्ये नवजलदश्यामलो हरिः शेते ॥ ८२ ॥

नाभीसरोवनान्तः क्रीडन्मदनाद्विपाधिपोत्क्षिप्ताम् ।
शैवालवल्लरीं ते रोमलतां देवि ! कथयन्ति ॥ ८३ ॥

मध्यः प्रथमं मानं महितगुणौघस्तवानुमानमपि ।
वपुरप्युपमितिशब्दं दूरीकुरुतेऽम्ब ! केन वर्ण्यासि ॥ ८४ ॥

तव कुचकुम्भस्य गुरोरन्तेवासी विवेकहीनस्य ।
दर्शनयोग्यो नाभून्मध्यस्ते देवि ! नास्तिवादरतः ॥ ८५ ॥

प्रत्यक्षाविषयत्वादतिरिक्तत्वादनङ्गजनकत्वात् ।
देवि! बलिश्रीभजनान्मध्यस्ते कान्तविभ्रमं तनुते ॥ ८६ ॥

चिन्तामणिवादस्ते करयोर्दृशि कामशास्त्रवादोऽब्जे! ।
मध्ये मायावादो गौरववादः पयोधरद्वन्द्वे ॥ ८७ ॥

महदणुपरिमाणगतं विश्रान्तं देवि तारतम्यं ते ।
वक्षोरुहे च मध्ये न व्योमादौ न चापि परमाणौ ॥ ८८ ॥

कठिनात्माधःकुरुते सर्वं कमले! कृशं सनाभिगतम् ।
दृष्टमितीदमुरोजे मध्यं कृशमेव कुर्वति स्पष्टम् ॥ ८९ ॥

तुङ्गपयोधरशैलद्वन्द्वोद्वहनेन सन्ततं देवि! ।
पश्यामि कार्यमुचितं मध्यस्य श्रीमतोऽपि ते मातः! ॥ ९० ॥

तव रोमराजियमुनानित्यस्फीतेऽपि मध्यदेशेऽस्मिन् ।
क्षामकथा कथमब्जे! नाभीसरसीपरिष्कृतेऽपि सदा ॥ ९१ ॥

रोमालियूपदण्डे चित्तपशुं ब(द्धु? न्धु)मम्ब! ते पत्युः ।
सम्पादितेव रशना त्रिवलिमिषेणाङ्गजन्मनाध्वरिणा ॥ ९२ ॥

आभाति नाभिरब्जे! तव तनुजनुषा निषादवीरेण ।
पातयितुं हरिचित्तं मत्तेभं सम्भृतो यथा गर्तः ॥ ९३ ॥

शङ्के तवाम्ब! नाभिं शम्बररिपुणा विजित्य दैत्यारिम् ।
रोमालिनीलरत्नस्तम्भनिखाताय संभृतं श्वभ्रम् ॥ ९४ ॥

निवसन्ति येऽधिकाञ्चि प्रायः शुद्धा भवन्ति ते मुक्ताः ।
इति मणिरशनांविकसन्मुक्तावल्याम्ब! दर्शयसद्धा ॥ ९५ ॥

अवनतमौलिरियं त्वामञ्जलिमभिनीय कुसुमकोशमिषात् ।
रम्भा तवोरुविजिता सम्भावयतीति मे तर्कः ॥ ९६ ॥

कुम्भीन्द्रकुम्भवृत्तं जानुद्वन्द्वं तवाप्रतिद्वन्द्वम् ।
हन्त हरेरपि धैर्यं हरते दुर्धर्षमब्धिराजसुते ! ॥ ९७ ॥

जङ्घा निषङ्गशङ्कामङ्कूरयत्यङ्गजन्मनो देवि ! ।
तत् खलु तदग्रभागे पञ्चशरस्फूर्ति(म ? र)ङ्गुलिव्याजात् ॥ ९८ ॥

तव पदभावः प्राप्तस्तामरसेनेति नात्र सन्देहः ।
कथमन्यथा स योगो भावी कान्तेन हंसकेनाब्जे ! ॥ ९९ ॥

पादतल परिदृश्यं पद्मे ! रेखात्मना स्वयं गूढम् ।
तव चरणश्रीभिक्षाचरणं विदधाति स(ज्य ? त्य)मम्बुरुहम् ॥१००॥

अर्कोऽपि यस्य भजनादजनि श्रीमाननेन जनितश्रीः ।
पद्मं कथं नु तुलनामर्हति पादेन तावकेनाब्जे ! ॥ १०१ ॥

जलजं कृतसंकोचं द्विजराजस्यापि दर्शने देवि ! ।
मानितमधुपं शिरसा कथमधिरोहेत् पदेन ते तुलनाम् ॥ १०२ ॥

साम्राज्येऽम्बुरुहाणां तव पदमीडेऽभिषिच्यमानमिव ।
जा(नु ? ति)स्मृतं जनानां हेतुः सञ्चि(न्ति)तार्थसिद्धीनाम् ॥१०३॥

मदनदरीजनकबरीनलिनैरुद्यन्मरन्दसंसारे(?) ।
पातु पराकृतपद्मं मातुर्जगतां पदाम्बुजातं माम् ॥ १०४ ॥

सम्भावितापचारं ज्ञानाज्ञानात्तव स्तुतिव्याजात् ।
देवि सहस्व दयालो ! देहि मम श्रीपतौ परां भक्तिम् ॥ १०५ ॥

जगति ख्यातिरशेषात्त्वकुलेयेति सर्वसिद्धान्तम् ।(?)
जननि कथं ते ख्यातेरुत्पत्तिः श्रूयते पुराणादौ ॥ १०६ ॥

यज्ञवराहः श्रीमान् वाधूलम्बालजो धीमान् ।
लक्ष्मीशतकमतानीदक्षीणानन्दकन्दलीकन्दम् ॥ १०७ ॥

---

# *नवरत्नमालास्तोत्रम् ।

श्रीमद्भिराक्षिवलनैः परितः सरोज
श्रेणीं किरन्नधिहिरण्मयदिव्यडोळम् ।
यः श्रीधराकलितमाकलयन् मुदा त-
दान्दोळनं स्फुरति नन्दशिशुं तमीडे ॥ १ ॥

आन्दोळनानि मणिसुन्दरडोळिकायां
यः श्रीधरोपकलितानि समश्नुवानः ।
मन्दस्मितेन मधुरेण निजान् विधिन्वन्
नन्दार्भको भवतु मे नयनाध्वनीनः ॥ २ ॥

माणिक्यकुण्डलमनोहरतारहारा-
द्युद्दामभूषमुपबर्हनिविष्टबाहुम् ।
तं श्रीधराश्रितपदं श्रितदिव्यडोळं
बालं नुमः कमपि वासवरत्ननीलम् ॥ ३ ॥

यः श्रीधरः स्मरहरादिविलोचनाञ्ज-
ल्यादीयमानपवनो रमतेऽधिडोळम् ।
आन्दोळनेन जननीकलितेन नन्दं
मन्दं हसन् मनसि मेऽस्तु स नन्दसूनुः ॥ ४ ॥

अत्रामृतं प्रविचकास्त्यमृतार्थिनां त-
दासेव्यमेतदिति बोधयितुं पदं स्वम् ।
आस्ये निधाय रसयन्नधिरत्नडोळ-
म(द्रय?ग्र?ऽ)स्तु मेऽअरुचिरार्भकसार्वभौमः ॥५॥

---

* *This Stotra is taken from the Ms. No 2375 A in grantha Script available in the Library of this Institute.*

डोलाधिरूढमुपबर्हधृतापराङ्गं
फालान्तराकलितहीरललन्तिकाढ्यम् ।
वैयाघ्रचारुनखराञ्चितमभ्रनीलं
बालं कदा ननु पिबानि दृशा विशङ्कम् ॥ ६ ॥

डोलां गतस्तदनुषञ्जितरत्नगुच्छे
दृष्ट्वा स्वबिम्बमपरार्भकविभ्रमेण ।
अव्यक्तजल्पदरहासमुखैर्विलासै-
र्दीव्यन् ममास्तु हृदि दिव्यशिशुः सलीलम् ॥७॥

आकल्पितैणमदचित्रकभूतिरेख-
फालं कपोलतलबिम्बितकर्णभूषम् ।
डोलां गतं व्रजवधूपरिचुम्ब्यमान-
श्रीमन्मुखं कमपि दिव्यशिशुं स्मरामः ॥ ८ ॥

आभीरपुण्यविभवावतरोऽधिडोलं
यः श्रीधराकलिततच्चलनैः प्रहर्षन् ।
अत्येधितैः कलशसिन्धुतरङ्गडोला-
न्दोलैरिवास्तु हृदि मे स किशोरमौलिः ॥ ९ ॥

श्रीबालकृष्णविनुतिं नवरत्नमाला-
ख्यानामिमां परिपठत्युदितादरो यः ।
सत्पुत्रसम्पदमियादचलां च लक्ष्मीं
श्रीकृष्णभक्ततिलकश्च भवेत् स धन्यः ॥१० ॥

---

## *अन्नपूर्णास्तवः

विश्वेश्वरीं वरेण्यां विश्वाश्रयणीं विशिष्टफलदात्रीम् ।
स्तोष्यामि वाञ्छिताप्त्यै स्तोत्रैरन्नाधिनायिकामम्बाम् ॥ १ ॥

काञ्चनरत्नविचित्रां दर्वीं दधतीं तथान्नपात्रं च ।
कष्टदरिद्रार्तिहरामम्बां प्रणतोऽस्मि सम्पदां वृद्ध्यै ॥ २ ॥

सर्वाभिलाषपूरणकल्पकलतिकान्नपूर्णाख्या ।
दारिद्र्यदोषमुग्रं शमयतु सकलार्थवृद्धिदानेन ॥ ३ ॥

अन्नाधिनायिकायाः कृपाघना दुःखघर्मपरितप्ते ।
मयि दारिद्र्यकृणघ्न्या वर्षतु धनधान्यधारया सुचिरम् ॥ ४ ॥

वेदादिर्भुवनाहृद्भगवति माहेश्वरीति चान्नान्ते ।
पूर्णेऽग्निवल्लभा स्यादुक्तोऽयं मनुरशेषफलदायी ॥ ५ ॥

गुरुकारुण्याल्लब्धं मन्त्रमिदं दिनमुखेषु भक्ताधिया ।
यो जपति तस्य सिद्धिर्न दुर्लभा जायते च तापघ्नी ॥ ६ ॥

तव पादकमलसेवाहृतचित्तः साधकः समाहितधीः ।
तरति महाभवदुर्गं विश्रुतकीर्तिप्रभावसौभाग्यः ॥ ७ ॥

त्वज्जपपूजाध्यानप्रभेदपरिनिष्ठितात्मधीर्मनुजः ।
निःस्वोऽप्यकिञ्चनोऽपि त्रिभुवनविख्यातकीर्तिराशिः स्यात् ॥ ८ ॥

---

* *This stotra in praise of Goddes Annapūrṇā is based on the Ms. No. P. L. 1147 z.*

निधिवृन्दमध्यगां त्वां ध्यात्वा मन्त्रं यदा नरो जपति ।
देवि तदास्य निवासं विशन्ति विविधार्थपूरिता निधयः ॥ ९ ॥

दिव्यान्नपूर्णपात्रं दर्वीं च करद्वयेन बिभ्राणाम् ।
ध्यात्वा यदि जपति त्वां प्रपूर्यते तस्य वेश्म धान्यौघैः ॥ १० ॥

यस्मिन् वसति मनुष्यस्तव मन्त्रविशेषजापको देशे ।
तत्र न दीना वाणी प्रवर्तते देवि 'नास्ति नास्ती'ति ॥ ११ ॥

अन्नाद्रिमध्यविस्फुरदम्बुजमध्ये त्रिमण्डलान्तःस्थाम्[1] ।
ध्यायेद्यो दारिद्र्याद्विमुच्यते साधकः स एवाशु ॥ १२ ॥

इन्द्राग्निसोमभास्करवरुणानिलधनदतार्क्ष्यकन्दर्पाः ।
विष्णुविरिञ्चिप्रमुखा देवास्त्वद्ध्यानसम्पदा प्रथिताः ॥ १३ ॥

युष्मदपाङ्गघनोऽयं प्रशमितबहुदुःखघर्मतापौघः ।
धारासारघनौघं वर्षतु मयि देवि सर्वदा कृपया ॥ १४ ॥

तव पाणिपल्लवस्था दर्वी दिव्यान्नपूरिता देवि ।
दारिद्र्यदोषमुग्रं शमयतु मम सम्पदां वृद्ध्यै ॥ १५ ॥

वीक्षस्व मामनेकामयदुरितदुरन्तदुःखपरितप्तम् ।
मातर्विभूतिमय्या दिव्यामृतसारधारया दृष्ट्या ॥ १६ ॥

अभिनवभास्करकोटिप्रभासमुद्भासितं हि ते रूपम् ।
हृदयाम्बुजमध्यगतं देवि समाधौ भजन्ति योगीन्द्राः ॥ १७ ॥

आदौ सृजसि च विश्वं प्रपासि सचराचरं जगद् भूयः ।
संहरसि लोकमन्ते गुणत्रये सा त्वमेव देव्येका ॥ १८ ॥

---

१. 'प्ताम्' Ms.

मायोदधिरयमम्ब विषयग्राहोर्मिदारुणो भवति ।
त्वत्तापबाडवाग्नौ सोऽपि च विलयं प्रयाति तच्चित्रम् ॥ १९ ॥

श्रीमद्गुरुप्रसादात्तत्त्वं तव योऽभिवेत्ति लोकेऽस्मिन् ।
देवि स मनुजो लोके पारत्रिकमैहिकं शमभ्येति ॥ २० ॥

हुतभुङ्मण्डलमध्ये विलसितरविबिम्बमध्यगं त्वमृतम् ।
सोमात्मकं विदित्वा देवि त्वद्भावनेन पूतः स्यात् ॥ २१ ॥

गुरुवरपादपवित्रीकृतान्तरात्मा प्रतापयित्वा त्वाम् ।
देवि चिदग्नौ दीप्ते योगी योगामृतं जुहोत्येव ॥ २२ ॥

सकृदपि युष्मद्भक्तो दिव्यामृतमम्ब भावपात्रस्थम् ।
पिबति विदित्वा सम्यग् जीवन्मुक्तः स विज्ञेयः ॥ २३ ॥

योगामृतपूतात्मा योगी विजितेन्द्रियारिजितसङ्गः[1] ।
नहि जननीगर्भगृहं प्रविशति योगेशि योगभावितधीः ॥ २४ ॥

योगी त्वयाहिधत्ते[2] संवित्तिपदे तदैव परितुष्टिम् ।
विधिहरिरुद्रादीनां गणयति न पदानि देव्यनित्यानि ॥ २५ ॥

षट्त्रिंशत्तत्त्वाख्यं शिवादिभूम्यन्तमम्ब विश्वमिदम् ।
यस्योर्मिबुद्बुदः स्यात् तत्ते संवित्तिमाश्रये धाम ॥ २६ ॥

मूलाधारनिवासा सूक्ष्मा सूर्यायुतोपमा शक्तिः ।
निर्भिद्य षट्सरोजं यान्ती या सा त्वमेव शम्भुपदम् ॥ २७ ॥

षोडशपत्रसरोजात् स्रवन्महाधारया सहोद्दीप्ता ।
यान्ती मूलनिवासं या हि कुळा कुण्डली त्वमेवाम्ब ॥ २८ ॥

---

१. ' सङ्ग: ' Ms. २. ' भि ' Ms.

जित्वा षट् पञ्च पुनर्निरुध्य दशकं तथैकमवलम्ब्य ।
देवि तव रूपमब्जे हृदयस्थे संयमी स्मरति ॥ २९ ॥

स्थूलं तवाम्ब रूपं योगिमनःपद्मकर्णिकासंस्थम् ।
योगविवृद्ध्यै सिद्धिं मम दिशतु समस्तवाञ्छितावाप्त्यै ॥ ३० ॥

सूक्ष्मं तवाम्ब रूपं सकलजगत्त्राणकारणोद्भूतम् ।
स्तोष्ये तदेव भक्त्या वाञ्छितसिद्धिप्रदानसुरवृक्षम् ॥ ३१ ॥

श्रीदुर्गा वाग्देवी गिरिजा लिपिमातृका च मातङ्गी ।
त्रिपुरा तथान्नपूर्णा राज्या रमा चेति कीर्तिता मुनिभिः ॥ ३२ ॥

वाग्देवीं वागाप्त्यै दुर्गां भयशान्तये श्रियं भूत्यै ।
आराधयति मनुष्यः पुरुषार्थचतुष्कलब्धये त्रिपुराम् ॥ ३३ ॥

बहुरूपधारिणीं त्वां बहुधा प्रवदन्ति मानवा लोके ।
गुरुमन्त्रदेवतात्मस्वरूपिणीं भावयाम्यहं त्वेकाम् ॥ ३४ ॥

कथमम्ब रूपमाद्यं तव रूपगुणाधिकं च चिन्मात्रम् ।
जानामि देवि तस्माद् दुरुक्तमीशि क्षमस्व तत् सर्वम् ॥ ३५ ॥

दारिद्र्यदुरितदुःखप्रशान्तये व्याहृतं मया स्तोत्रम् ।
देवि सदा तं जपतां भक्तानां भवतु कामधेनुरिदम् ॥ ३६ ॥

स्तोत्रेण त्वं तुष्टा मयोदितेन प्रभूतधनधान्यैः ।
पूरय वेश्म मदीयं विधेहि मयि सन्निधिं प्रपद्ये त्वाम् ॥ ३७ ॥

---

॥ श्री ॥

# *चर्चास्तवः

सौन्दर्यविभ्रमभुवो भुवनाधिपत्य-
सम्पत्तिकल्पतरवस्त्रिपुरे! जयन्ति ।
एते कवित्वकुमुदप्रकरावबोध
पूर्णेन्दवस्त्वयि जगज्जननि! प्रणामाः ॥ १ ॥

---

* The Carcāstava which we are publishing in the following pages is a hymn on the Goddess Gaurī. It contains twentysix beautiful stanzas. It is not known who the author of this Stotra is or when it was written. But, we may notice that in composing this work the author has used many ideas from the 'Vimśatistava' or 'Laghustuti' of Laghubhattāraka (T. S. S. 60).

The edition is based on the following manuscripts available in the Library of this Institute

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| No: | 1384.D- | Script- | Grantha | No: | 3501 D- | Script- | Mal |
| ,, | 3186.B- | ,, | ,, | ,, | 13506 H- | ,, | ,, |
| ,, | 4231.C- | ,, | ,, | Loan | 1178 G- | ,, | ,, |
| ,, | 5088.E- | ,, | Mal. | ,, | 11 A 2- | ,, | ,, |
| ,, | 8318.A9- | ,, | ,, | ,, | 270 Z 12- | ,, | ,, |
| ,, | 8934.A10- | ,, | ,, | | | | |

Of these, the first six manuscripts are complete and similar. The next three are also similar. A certain number of stanzas are missing in these Some stanzas are found missing in the remaining two manuscript also.

EDITOR

देवि! स्तुतिव्यतिकरे कृतबुद्धयस्ते
वाचस्पतिप्रभृतयोऽपि जडीभवन्ति।
तस्मान्निसर्गजडिमा कतमोऽहमत्र
स्तोत्रं तव त्रिपुरतापनपत्नि! कर्तुम् ॥ २ ॥

मातस्तथापि भवतीं भवतीव्रताप-
विच्छित्तये स्तुतिमहार्णवकर्णधारः।
स्तोतुं भवानि! स भवच्चरणारविन्द-
भक्तिग्रहः किमपि मां मुखरीकरोति ॥ ३ ॥

सूते जगन्ति भवती भवती बिभर्ति
जागर्ति तत्क्षयकृते भवती भवानि!।
मोहं भिनत्ति भवती भवती रुणद्धि
लीलायितं जयति चित्रमिदं भवत्याः ॥ ४ ॥

यस्मिन्मनागभिनवाम्बुजपत्रगौरीं
गौरि! प्रसादमधुरां दृशमादधासि।
तस्मिन्निरन्तरमनङ्गशरप्रकीर्ण-
सीमन्तिनीनयनसन्ततयः पतन्ति ॥ ५ ॥

पृथ्वीभुजोऽप्युदयनप्रवरस्य तस्य
विद्याधरप्रणतिचुम्बितपादपीठः।
यश्चक्रवर्तिपदवीप्रणयः स एष
त्वत्पादपङ्कजरजःकणजः प्रसादः ॥ ६ ॥

कल्पद्रुमप्रसवकल्पितचित्रपूजा-
मुद्दीपितप्रियतमामदरक्तगीतिम् ।
नित्यं भवानि! भवतीमुपवीणयन्ति
विद्याधराः कनकशैलगुहागृहेषु ॥ ७ ॥

लक्ष्मीवशीकरणकर्मणि कामिनीना-
माकर्षणव्यतिकरेषु च सिद्धमन्त्रः ।
नीरन्ध्रमोहतिमिरच्छिदुरप्रदीपो
देवि! त्वदङ्घ्रिजनितो जयति प्रसादः ॥ ८ ॥

देवि! त्वदङ्घ्रिनखरत्नभुवो मयूखाः
प्रत्युप्तमौक्तिकरुचो मुदमुद्वहन्ति ।
सेवानतिव्यतिकरे सुरसुन्दरीणां
सीमन्तसीम्नि कुसुमस्तबकायितं यैः ॥ ९ ॥

मूर्ध्नि स्फुरत्तुहिनदीधितिकान्तिमिश्रं
मध्येललाटममरायुधरश्मिचित्रम् ।
हृच्चक्रचुम्बिहुतभुक्कणिकानुरूपं
ज्योतिर्यदेतदिदमम्ब! तव स्वरूपम् ॥ १० ॥

सिन्दूरपांसुपटलच्छुरितामिव द्यां
त्वत्तेजसा जतुरसस्नपितामिवोर्वीम् ।
यः पश्यति क्षणमपि त्रिपुरे विहाय
व्रीडां मृडानि! सुदृशस्तमनुव्रजन्ति ॥ ११ ॥

मातर्मुहूर्तमपि यः स्मरति स्वरूपं
लाक्षारसारुणिततन्तुनिभं भवत्याः ।
ध्यायन्त्यनन्यमनसस्तमनङ्गतप्ताः
प्रद्युम्नसाम्यसुभगत्वगुणं तरुण्यः ॥ १२ ॥

योऽयं चकास्ति गगनार्णवरत्नमिन्दु-
र्यो यश्चराचरगुरुः पुरुषः पुराणः ।
यद्धाममर्धमिदमन्तकसूदनस्य
देवि! त्वमेव तदिति प्रतिपादयन्ति ॥ १३ ॥

रूपं तव स्फुरितचन्द्रमरीचिगौर-
मालोकते शिरसि वागधिदैवतं यः ।
निस्सीमसूक्तिवचनामृतनिर्झरिण्य-
स्तस्य प्रसादमधुराः प्रसरन्ति वाचः ॥ १४ ॥

ये चिन्तयन्त्यरुणमण्डलमध्यवर्ति
रूपं तवाम्ब! नवयावकपङ्कपिङ्गम् ।
तेषां सदैव कुसुमायुधबाणभिन्न-
वक्षःस्थला मृगदृशो वशगा भवन्ति ॥ १५ ॥

उत्तप्तहेमरुचिरे त्रिपुरे पुनीहि
चेतश्चिरन्तनमघौघवनं लुनीहि ।
कारागृहे निगळबन्धनयन्त्रितस्य
त्वत्संस्मृतौ झटिति मे निगळा गळन्ति ॥ १६ ॥

इच्छानुरूपमनुरूपगुणप्रकर्षं
सङ्कर्षणी त्वमभिषिच्य यदा बिभर्षि ।
जायेत स त्रिभुवनैकतनुस्तदानीं
देवः शिवोऽपि भुवनत्रयसूत्रधारः ॥ १७ ॥

त्वां योगिनीति सुमना इति कुण्डलीति
त्वां कामिनीति कमलेति कलावतीति ।
त्वां मालिनीति ललितेत्यपराजितेति
देवि! स्तुवन्ति विजयेति जयेत्युमेति ॥ १८ ॥

रुद्राणि! विद्रुममयीं प्रतिमामिव त्वां
ये चिन्तयन्त्यरुणकान्तिसमानरूपाम् ।
तानेत्य पक्ष्मलदृशः प्रसभं भजन्ते
कण्ठावसक्तमृदुबाहुलतास्तरुण्यः ॥ १९ ॥

त्वद्रूपमुल्लसितदाडिमपुष्परक्त-
मुद्भावयन्मदनगर्वितमग्रतो यः ।
तं वीतयौवनमपि त्रिपुरे पुरन्ध्री-
वृन्दानि विभ्रमशतैरभिनन्दयन्ति ॥ २० ॥

संवित्सरोजबिसकन्दलबिन्दुरूपे
संसारसन्तमसबन्धविभावसाध्ये ।
त्रायस्व कुण्डलिनि कुङ्कुमताम्रदेहे
मातस्त्रिकोणमणिमण्डपदीपरेखे! ॥ २१ ॥

आधारमारुतनिरोधवशेन येषां
सिन्दूररञ्जितसरोजगुणानुकारि ।
तीव्रं हृदि स्फुरति देवि! वपुस्त्वदीयं
धावन्ति तानिह समीहितसिद्धसार्थाः ॥ २२ ॥

त्वामैन्दवीमिव कलामनुफालदेश-
मुद्भासिताम्बरतलामवलोकयन्तः ।
सन्तो भवानि! सुधियः कवयो भवन्ति
त्वं भावनाधिकृतधियां किल कामधेनुः ॥ २३ ॥

याचे न कञ्चन न कञ्चन वञ्चयामि
सेवे न कञ्चन निरस्तसमस्तदैन्यः ।
श्लक्ष्णं वसे मधुरमद्मि भजे वरस्त्री-
र्मातर्यदा त्वमसि मे हृदि कामधेनुः ॥ २४ ॥

यः स्तोत्रमेतदनुवासरमीश्वरायाः
श्रेयस्करं पठति वा यदि वा शृणोति ।
तस्यैहिकं फलति राजभिरीड्यतेऽसौ
जायेत स प्रियतमो मदिरेक्षणानाम् ॥ २५ ॥

खड्गं पादुकमञ्जनं च घुटिकां सारस्वतं सम्पदं
मृत्योर्वञ्चनमुग्रकालहरणं देहस्थितेः कारणम् ।
भ्रूभङ्गानततुङ्गवृक्षपतनं वश्यं जगद्योषितां
चर्चास्तोत्रमिदं करोति सततं नृणां महीमण्डले ॥ २६ ॥

चर्चा समाप्ता ।

---

# *छायाविंशतिः

गुरूणां विद्यासौ स्फुरितकरुणोदन्वदुदित-
प्रभावेन्दुज्योत्स्ना हृदयकुमुदोद्भेदनपटुः ।
यया सूक्तिस्रोतःस्रवदमृतया ध्वस्ततमसा
प्रकाश्यन्ते सर्वा अपि सपदि शास्त्रार्थककुभः ॥ १ ॥

अनीशामीशानीं वदति निरयाणां प्रशमदो
गुरुः कल्याणीं यामथ च सकलां पूर्वपरगाम् ।
सिता पीता रागोज्ज्वलिततनुरुद्धारसहिता
विचित्रा प्रोक्ता सा मनसि रमतां मे भगवती ॥ २ ॥

मनोवाग्दुःस्पर्शे मुररिपुविधात्रोरपि तव
स्वरूपे जात्यन्धः कथमिव करोमि स्तुतिमहम् ।
दिशो लक्षीकृत्य प्रहित इव बाणोऽयमथवा
मदीयो वाग्बन्धस्त्वयि पततिं सर्वात्मवपुषि ॥ ३ ॥

---

* *This stotra is in praise of Devī. The name of the stotra denotes the fact that though Goddess is praised in different forms as Ramā, Vāṇī, Kāḷī etc, She is one and the same, just like the same sun is reflected in different forms in different waters. (Vide Sl. No. 21) The publication is based on the Ms. No: 20155.*

शिवं गुर्वात्मानं गुरुमपि शिवात्मानमसकृत्
प्रणम्यान्तर्भक्त्या स्रजमिव तदाज्ञां च शिरसा ।
दृशावानन्दास्रैः कुसुमनिकरैरञ्जलिपुटं
प्रपूर्यान्तःप्रेम्णा प्रणतवरदां नौमि भवतीम् ॥ ४ ॥

रसार्द्रा वा कामं रसविरहिता वा स्तुतिरसा-
वसाध्वी साध्वी वा न खलु गुणदोषौ भवतु नः ।
यथात्मानं दृष्टिर्मुकुरपतिता पश्यति तथा
गिरं त्वां गीर्भिस्त्वं (यन्म ? मम) मुखगता स्तौषि वरदे ॥५॥

समुद्भूता चोच्चैःस्थितिमुपगतात् केशवपदात्
स्थिता गौरीशेन स्वपदपरिपूजाहितमुदा ।
शुचिश्रीमत्तीर्था शिवगुरुगिरिप्राप्तमहिमा
स्वरूपं ते विद्या मम भजतु गङ्गेव जलधिम् ॥ ६ ॥

अयं तेजोवर्णः कविभिरुदितो वाग्भव इति
स्फुरद्बिन्दूद्भेदस्त्रिगुणतनुराधारविततः ।
समुद्बुद्धो यस्य व्रजति सहसा ब्रह्म सदनं
स योगी चोद्बुद्धो व्रजति सहसा ब्रह्मसदनम् ॥ ७ ॥

विदुर्ब्राह्मीं केचित् किल विषमभिन्नां तदितरे
तथाप्येका सा ते तनुरिति वयं निश्चिनुमहे ।
प्रभेदो वाग्वाणी वच इति समाख्यासु बहुधा
स्वयंवाच्ये शब्दे न भवति पुनः काचन भिदा ॥ ८ ॥

द्वितीयः कामात्मा स्फुरति तव लीनो हृदि सदा
स बिन्दुः सन्नादो भगवति मुदां बीजमिव यः ।
स्मिते यस्मिन् क्षुभ्यत्यखिलमपि चन्द्रोदयगळ-
न्महाम्भोधिप्रख्यं भवनमबलां किं पुनरमूम् ॥ ९ ॥

मनोरम्यः सौम्यः प्रशमिततमो येन शिरसि
स्मृतो बीजात्मा ते भगवति मुदां बीजमिव यः ।
वचोवीचीवेगोद्धतिविधुतविध्वस्तगरिम
क्षिपेत् क्षिप्रं वादिप्लवकुलमसावम्बुधिरिव ॥ १० ॥

स्वमूर्ध्नि ध्यातायास्तव धवलपीठाब्जगदिता
सुधाम्भोवृष्टिर्या स्फुटपुळकसस्याङ्कुरसुहृत् ।
पुनः सूक्तिच्छद्मा श्रुतिचुलुकपेया मुखशशि-
प्रणाळीवान्ता सा सरिदिव सरीसर्ति सरसा ॥ ११ ॥

प्रमोदेन्दुक्लिन्नं नयनशशिकान्तात्समुदितं
यदम्भस्त्वद्रूपं स्मृतिमयसुखास्वादसुखिनः ।
न तद् बाष्पं मन्ये समुपनतलक्ष्मीकरपुट-
त्रिलोकीराज्याप्ते रुचितमभिषेकाम्बु गळति ॥ १२ ॥

चिदात्मा ते विद्युत्कणरुचिरणोरप्यणुतरो
निरीक्ष्यो यो बिन्दुः क्षणमपि दृशा सूक्ष्मतरया ।
सशैलाब्धिद्वीपं सकलमपि स ब्रह्मसदनं
तदन्तःसंलीनं तत उदितमत्यद्भुतमिदम् ॥ १३ ॥

अजप्ता जप्ता वा स्वयमतिमहान्तोऽतिलघवः
सकीला निष्कीला गुरुभिरुपदिष्टा अपि न वा ।
प्रसन्नायां देवि त्वयि सकलतन्त्राश्च फलदा-
स्तरुर्मूले सिक्तः फलति खलु शाखाशतमयः ॥ १४ ॥

यशोवश्यैश्वर्यद्रविणकविताद्यैहिकफलं
लघु प्राप्तुं यस्त्वां भजति परमानन्दफलदाम् ।
सुमेरुं माषार्धं सुरभिमपि तक्रं सुरतरुं
सुजीर्णं कौपीनं सुजळमतिरभ्यर्थयति सः ॥ १५ ॥

तव ध्यात्वा मूर्तिं जतुरसजपापुष्पसदृशीं
नरस्तस्यां यो निक्षिपति कुसुमान्यर्चनविधौ ।
ध्रुवं तैरेवाशु स्मरविशिखभूतैः स्वहृदये
विलासिन्यो विद्धा विदधति तदङ्के विलुठनम् ॥ १६ ॥

नृमुण्डैराबद्धां स्रजमुरसिजाभोगलुठितां
दधानामारक्तांशुककिसलयां किंशुकनिभाम् ।
चतुर्बाहुं चन्द्रावयवसुमनश्शेखरजटां
प्रणौमि त्वां प्रेतासनमुपगतां भैरववधूम् ॥ १७ ॥

शिरश्चन्द्रच्छायाप्रसरपुनरुक्तास्मितरुचिं
वपुर्लक्ष्मीलब्धाधिकसितमहार्घाम्बरधराम् ।
वरोद्युक्तां साक्षस्रजमभयदां पुस्तकधरां
सकृद् यस्त्वां भक्त्या प्रणमति नमाम्यम्ब तमहम् ॥ १८ ॥

यजन्ते येऽष्टाभिर्दिनमनु विधानेन सुभगा
भगाद्याभिस्ताभिर्भगवति शिवे त्वां परिवृताम् ।
क्षमाभूतिख्यातिद्युतिमतिधृतिश्रीसुभगता-
परीताः पूज्यन्ते स्वयमनु जनैस्ते सुकृतिनः ॥ १९ ॥

यथोक्तं यैरिष्टो विधिविरचिताष्टाष्टकभिदा
गणो मातॄणां ते गहनमहिमा भैरवसखः ।
स्फुरद्धिद्यादीपद्युतिविततिसन्दर्शितपदाः
प्रयान्ति त्वत्स्थानं पुनरपुनरावर्तनममी ॥ २० ॥

यथैकश्चैकस्थः स्वयमपिहितात्मा दिनकरो
विभाति छायावान् बहुषु जलकुम्भेषु बहुवत् ।
तथैवैका बह्वी स्फुरति शबरीशौरितनया-
रमावाणीकाळीरतिधृतिधरण्यादितनुभिः ॥ २१ ॥

नरात्मा नारीत्वे तरुरपि लतात्वे तव मृगो
मृगीत्वे लक्ष्मीत्वे हरिरपि शचीत्वे शतमखः ।
उमात्वे रुद्रात्मेत्यथ तदनुरूपाकृतिरसौ
शिवः सर्वत्रापि स्वयमनुचरत्यम्ब भवतीम् ॥ २२ ॥

स्त्रियो यास्त्रैलोक्ये विदधति च या संसृतिरसं
विना याभिः सृष्टिः क्वचिदपि न काचित् प्रसरति ।
विना याभिर्मुह्यत्यपि जयति याभिर्मनसिजः
समस्ताभ्यस्ताभ्यो भगवति तनूभ्यस्तव नमः ॥ २३ ॥

शिवे विद्ये देवि त्रिभुवनजनन्यम्ब शबरि
क्रिये श्रद्धे मेधे सति गिरिसुते वाणि परमे ।
महामाये नित्ये मधुमति महाभैरवि रमे
भवानि श्रीः शक्ते भगवति नमस्तेऽहमकृषि ॥ २४ ॥

श्रियं पृष्ठे कृत्वा हृदि तव पदाम्भोजयुगळीं
वयं वाणीपुष्पैः स्रजमरचयाम स्तुतिमयीम् ।
स्वयं गृह्णीष्वैनां शरणमनुगृह्णातु भवती
त्वदीया भूयास्म त्वयि भवतु भक्तिः स्थिरतरा ॥ २५ ॥

सदा सूक्तिध्यानामृतरसनिषेकोत्थपुळक-
प्ररोहाः स्वान्ते त्वत्पदकिसलयं देवि दधति ।
स्फुरन्त्येवाभीष्टाश्चुलुकपुटिकाकोमलपुट-
स्फुरत्पूजापुष्पान्वयसमुदिता भक्तिललिताः ॥ २६ ॥

छायाविंशतिः सम्पूर्णा

---

# श्रीकृष्णमुक्तकम्

उदेतु हृदयाकाशे मम हेरम्बभास्करः।
उत्साहकमलोल्लासं कुर्वन् विघ्नहिमं नुदन् ॥

अभ्यर्थितः कमलजेन भुवोऽपनेतुं
भारं बभूव वसुदेवसुतोऽद्भुताङ्गः।
तातेन यो व्रजमनीयत कंसभीत्या
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ १ ॥

नन्देन नन्दनधिया किल रक्ष्यमाणो
यः पूतनामनयदन्तिकमन्तकस्य ।
वात्यासुरं च शकटं तु पदा बिभेद
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ २ ॥

मात्रे प्रदर्श्य भुवनं विवृते निजास्ये
गर्गेण नामनि कृते सह पूर्वजेन ।
जह्रे मनांसि चरितैर्व्रजवासिनां यः
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ३ ॥

दुश्चेष्टितेन बत संयमितो जनन्या
पाशैरुलूखल उपासकलोकनिघ्नः।
भङ्क्त्वार्जुनौ धनदजाववति स्म यो वै
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ४ ॥

---

*This stotra is taken from the Ms No. 5819 D. of this Institute.*

गोवर्धनं गिरिवरं समुपेत्य वत्सान्
सञ्चारयन् सहबलस्तदुपत्यकासु ।
यो वत्सदानवमहन् बकदानवं च
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ५ ॥

गोपार्भकानजगरोदरसम्प्रविष्टान्
दृष्ट्वा स्वयं प्रसभमेत्य गळे प्रवृद्धः ।
प्राणैर्वियोज्य दितिजं स्वजनानपाद् यः
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ६ ॥

ब्रह्माणमाशु परिदर्शितयोगमायो
योऽमूमुहत् कृतवयस्यकवत्ससङ्घः ।
प्रीतश्च यः सपदि संस्तुवते च तस्मै
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ७ ॥

पौगण्डकं वय उपेत्य मनोज्ञवेषो
वृन्दावने तु पशुपैः सह चारयन् गाः ।
योऽहन् बलेन सह धेनुकदैत्यमुग्रं
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ८ ॥

क्रीडन् वने सहृदयैः सह गोपवेषं
ज्येष्ठेन यः सपदि घातितवान् प्रलम्बम् ।
मुञ्जाटवीमुपगतोऽग्निभयादपात् स्वान्
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ९ ॥

यः कालियस्य गरुडस्य कलिन्दजायाः
कालुष्यमेकपद एव पदा जहार ।
वह्निं समन्तत उपागतमापिबद् यः
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ १० ॥

यो यज्ञविघ्नकुपितेन्द्रनियुक्तमेघै -
रुत्सृष्टवारिपरिपीडितमात्मनाथम् ।
गोगोपवृन्दमवितुं धृतवान् महीध्रं
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ११ ॥

इन्द्रेण यो गतमदेन कृताभिषेको
गोविन्द इत्यभिहितस्त्रिदशैस्समेतैः ।
नन्दं जलेशपुरनीतमुपानयद् यः
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ १२ ॥

यः पृष्टनन्दवचसा गतमर्त्यबुद्धीन्
स्वस्मिन् यथार्थमवगन्तुमुदूढवाञ्छान् ।
आत्मस्वरूपमवबोधयति स्म गोपान्
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ १३ ॥

वृन्दावने चरति चन्द्रकराभिमृष्टे
वेणुस्वनश्रवणमोहितवल्लवीभिः ।
रासोत्सवं व्यतनुताखिलमोहनं यः
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ १४ ॥

यः शङ्खचूडमवधीदबला हरन्तं
व्योमं च गोपगणमद्रिगुहां नयन्तम् ।
नन्दं व्यमोचयदहेर्मुनिशापतोऽमुं
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ १५ ॥

योऽहन्नरिष्टमसुरं वृषभाकृतिं स्वान्
सन्त्रासयन्तमपि केशिनमश्वरूपम् ।
श्रीनारदोदितसमस्तमहापदानः
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ १६ ॥

अक्रूरमागतमकृत्रिमभक्तिभाजं
यो मानयन् सहबलो मधुरां प्रयातः ।
मार्गे प्रदर्श्य परमं महिमानमस्मै
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ १७ ॥

दुर्वादिनं रजकमाशु निपात्य कुब्जा–
मृज्वीं विधाय च सुदामकवायकाभ्याम् ।
दत्त्वा वरं सपदि यः प्रबभञ्ज चापं
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ १८ ॥

हत्वा गजं झटिति रङ्गगतः सराम-
श्चाणूरमुष्टिकमुखान् विनिहत्य मल्लान् ।
कंसं गुरुद्रुहमहन् सह सोदरैर्यः
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ १९ ॥

कृत्वा च बन्धनगतौ पितरौ विमुक्तौ
नन्दं विसृज्य सह बन्धुजनैर्व्रजाय ।
मातामहं यदुकुलस्य पतिं व्यधाद् यः
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ २० ॥

गर्गात् कृतोपनयनो व्रतमास्थितो यः
सान्दीपनिं गुरुमुपेत्य गृहीतविद्यः ।
तस्मै मृतार्भकमदाद्धृतपाञ्चजन्यः
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ २१ ॥

आश्वास्य गोपवनिताजनमुद्धवेन
गत्वा गृहं रमयति स्म वितीर्णगन्धाम् ।
श्वावल्किना हृतपृथात्मजसङ्कटो यः
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ २२ ॥

यो मागधेन समुपाहृतभूमिभारं
प्राप्ताहवोपकरणो बत चित्रयुद्धम् ।
कृत्वाग्रजेन (र ? स)हितो बहुशो जहार
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ २३ ॥

रुद्धे पुरे यवनकेन पुरीं विधाय
यो द्वारकां स्वजनमत्र निवेश्य हृष्टः ।
म्लेच्छं चकार मुचुकुन्ददृगग्निदग्धं
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ २४ ॥

मान्धातृसूनुमनुगृह्य जरासुताय
दत्त्वा जयं श्रुतविदर्भसुताभिलाषः ।
तां राक्षसेन विधिनोदवहच्छ्रियं यः
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ २५ ॥

लब्ध्वा तु शम्बरहृतं तनयं स्मरं यः
कृत्वा प्रयत्नमयशःपरिमार्जनाय ।
सात्राजितीमपि च जाम्बवतीमवाप
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ २६ ॥

हत्वा स्यमन्तककृते दयितापितृघ्न-
मक्रूरसीरिहृदिकात्मजसत्यभामाः ।
क्षुब्धाः प्रसन्नमनसश्च कृता हि येन
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ २७ ॥

कालिन्द्यविन्दत पतिं मिहिरात्मजा यं
विन्दानुविन्दसहजापि च मित्रविन्दा ।
बद्धर्षभं सपदि नाग्नजिती च सत्या
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ २८ ॥

भद्रां च केकयपतेस्तनयामुवाह
भित्त्वा च लक्ष्मपरैर्नरपैरभेद्यम् ।
मद्राधिपस्य तनयामपि लक्षणां यः
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ २९ ॥

भौमं निहत्य समुरं तदुपाहृतानां
स्त्रीणां तु षोडशसहस्रमुदावहद् यः ।
ताभिः पृथग्गृहगताभिररंस्त वै यः
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ३० ॥

दातुं तु भौमहृतकुण्डलमिन्द्रमात्रे
स्वर्गं गतः खगवरेण ससत्यभामः ।
यः स्वस्तरुं सह मदेन जहार शच्याः
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ३१ ॥

आनर्तनाथतनयापतिनाग्रजेन
यो द्वारकामधिवसन् निजवल्लभासु ।
एकैकशो दश दशाजनयत् तनूजान्
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ३२ ॥

यस्त्वर्जुनेन यतिवेषनिगूहितेन
दुर्योधनप्रियकृतं हलिनं प्रतार्य ।
भद्रां स्वसारमपहारितवान् सुभद्रां
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ३३ ॥

इन्द्रात्मजेन सह खाण्डवमग्निदग्धं
कृत्वा मयं च परिरक्ष्य सभामनेन ।
योऽकारयत् प्रियकृते खलु धर्मसूनोः
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ३४ ॥

भीमेन मागधनृपं युधि घातयित्वा
तद्बद्धभूपतिगणांश्च विसृज्य भक्तान् ।
योऽयाजयत् क्रतुवरेण हि धर्मसूनुं
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ३५ ॥

हत्वा तु चैद्यपृथिवीपतिदन्तवक्रा-
वाजन्मनः प्रभृति संभृतमत्सरौ यः ।
तुष्टो बभूव कृतकृत्यतयातिमात्रं
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ३६ ॥

साल्वं ससौभमखिलानपि मोहयन्तं
हत्वा ससैन्यमपि पौण्ड्रककाशिपौ यः ।
चक्रे च काशिनगरीं निजचक्रदग्धां
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ३७ ॥

आकृष्टनीलसरिता विविदान्तकर्त्रा
साम्बापकारविषमीकृतहस्तिनेन ।
यस्त्वग्रजेन सह रञ्जितवांस्त्रिलोकीं
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ३८ ॥

अज्ञातभूमिसुरधेन्वपहारदोषात्
सम्प्राप्तकूपवसतिं कृकलासरूपम् ।
उद्धृत्य यो गमितवान् नृपतिं नृगं स्वः
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ३९ ॥

मायावलोकनकुतूहलतोऽभियातं
धर्मं गृहस्थविहितं बहुधा प्रदर्श्य ।
चक्रे प्रसन्नमनसं खलु नारदं यः
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ४० ॥

श्रुत्वा निरुद्धमनिरुद्धमुपेत्य बाणं
जित्वा वृषध्वजगिरा तमथानुगृह्य ।
प्रत्यानयत् सपदि पौत्रमुषान्वितं यः
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ४१ ॥

दारिद्र्यतप्तदयितावचसा समेतं
स्वस्मै प्रदत्तपृथुकप्रसृतिं कुचेलम् ।
भूत्या जितामरपतिं कृतवान् क्षणाद् यः
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ४२ ॥

सूर्योपरागसमये भृगुवर्यतीर्थ-
स्नानार्थमागतनृपर्षिसुहृत्समाजे ।
यज्ञोत्सवं समतनोदृषिभिः पितुर्यः
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ४३ ॥

मात्रे तु कंसनिहतांस्तनयान् प्रदर्श्य
वैदेहभूपतिवृषश्रुतदेवविप्रौ ।
अन्वग्रहीद् युगपदेत्य गृहं तयोर्यः
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ४४ ॥

उत्पाद्य घोरसमरं कुरुपाण्डवानां
　भारं भुवो बत जहार निरायुधो यः ।
धर्मात्मजं च जयिनं कृतवान् सधर्मं
　कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ४५ ॥

तीर्थाप्लुते मुनिजनोज्झितसूतहत्यं
　स्विष्टकृतुं निहतवल्कलमग्रजं यः ।
आनन्दयच्चिरवियुक्तमुपेत्य हृष्टः
　कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ४६ ॥

ज्येष्ठेन रुक्मिणि हतेऽतिबलेऽक्षगोष्ठ्यां
　कालिङ्गभूपदशनांश्च निपात्य रोषात् ।
(सञ्चप्रियांञ्च ? तं च प्रियां च) समरञ्जय(मा ? दा)त्मना यः
　कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ४७ ॥

पार्थेन यः सह पदं परमं स्वमेत्य
　स्वीकृत्य नष्टतनयान् द्विजपुङ्गवाय ।
दत्त्वा वयस्यमकरोत् सफलप्रतिज्ञं
　कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ४८ ॥

मूर्त्या गिरा मधुरया स्मितवीक्षणाद्यै-
　राकृष्टसर्वकरणाः सकलाश्च देव्यः ।
आनन्दवारिधिगता न विदुर्यतोऽन्यत्
　कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ४९ ॥

योे विप्रशापहतमात्मकुलं निशम्य
वैराग्ययुक्तमनसौ पितरौ मुमुक्षू ।
श्रीनारदेन कृतवान् विदितात्मतत्त्वौ
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ५० ॥

प्रोवाच यः स्वमतमुत्तममुद्धवाय
यं सूरयो जगति भागवतं वदन्ति ।
पीतासवं च कृतवान् कुलमात्मशेषं
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ५१ ॥

कीर्तिं वितत्य भुवने सकलाघहन्त्रीं
यो दैवतैरनुमतो भवपद्मजाद्यैः ।
व्याधेन विद्धचरणो गतवान् स्वकाष्ठां
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ५२ ॥

**श्रीकृष्णमुक्तकमिदं** पठतां जनानां
यः पातकानि सकलानि विधूय सद्यः ।
भक्तिं स्थिरां स्वविषयां विदधाति तुष्टः
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ५३ ॥

गोपात्मजा व्रतकृशाः परिहासपूर्वं
योऽन्वग्रहीत् तदभिलाषसमर्थनेन ।
चक्रे च यो द्विजसतीः सफलात्मभक्तीः
कृष्णोऽवतात् स भगवान् हृदयस्थितो नः ॥ ५४ ॥

कृष्णः कृष्णः कृष्ण इत्यन्तकाले
जल्पन् जन्तुर्जीवितं यो जहाति ।
आद्यः शब्दः कल्पते तस्य मुक्त्यै
व्रीळानम्रौ तिष्ठतोऽन्यावृणार्थौ ॥ ५५ ॥

॥ श्री ॥

# *गौरीदशकम्

लीलारब्धस्थापितलुप्ताखिललोकां
लोकातीतैर्योगिभिरन्तश्चिरमृग्याम् ।
बालादित्यश्रेणिसमानद्युतिपुञ्जां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ १ ॥

प्रत्याहारध्यानसमाधिस्थितिभाजां
नित्यं चित्ते निर्वृतिकाष्ठां कलयन्तीम् ।
सत्यज्ञानानन्दमयीं तां तनुमध्यां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ २ ॥

नानाकारैः शक्तिकदम्बैर्भुवनानि
व्याप्य स्वैरं क्रीडन्ती या स्वयमेका ।
कल्याणीं तां कल्पलतामानतिभाजां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ३ ॥

आशापाशक्लेशविनाशं विदधानां
पादाम्भोजध्यानपराणां पुरुषाणाम् ।
ईशामीशार्धाङ्गहरां तामभिरामां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ४ ॥

चन्द्रापीडानन्दितमन्दस्मितवक्त्रां
चन्द्रापीडालङ्कृतनीलालकभाराम् ।
इन्द्रोपेन्द्राद्यर्चितपादाम्बुजयुग्मां तां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ५ ॥

---

* This stotra is taken from the Ms. No- 20155 of this Institution.

मूलाधारादुत्थितवत्याविधिरन्ध्रं
सौरं चान्द्रं व्याप्य विहायो ज्वलिताङ्गी ।
येयं सूक्ष्मात् सूक्ष्मतनु तां सुखदृश्यां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ।। ६ ।।

आदिक्षार्णान्ताक्षरमूर्त्या विलसन्तीं
भूते भूते भूतकदम्बप्रसवित्रीम् ।
शब्दब्रह्मानन्दमयीं तां तनुमध्यां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ।। ७ ।।

यस्याः कुक्षौ लीनमखण्डं जगदण्डं
भूयो भूयः प्रादुरभूदक्षतमेव ।
पत्या सार्धं रजताद्रौ विहरन्तीं
गौरीमम्बामम्बुरुहाक्षीमहमीडे ।। ८ ।।

यस्यामेतत् प्रोतमशेषं मणिमाला
सूत्रे यद्वत् क्वापि चरं चाप्यचरं च ।
तामध्यात्मज्ञानपदव्या गमनीयां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ।। ९ ।।

नित्यः सत्यो निष्कळङ्को जगदीशः
साक्षी यस्याः सर्गविधौ संहरणे च ।
विश्वाण्डान्तः क्रीडालोलां शिवपत्नीं
गौरीमम्बामम्बुरुहाक्षीमहमीडे ।। १० ।।

प्रातःकाले भावविशुद्धिप्रणिधानो
भक्त्या नित्यं जल्पति गौरीदशकं यः ।
वाचां सिद्धिं सम्पदमुच्चैः शिवभक्तिं
तस्यावश्यं पर्वतपुत्री विदधाति ।। ११ ।।

---

# *मार्यष्टकम्

बद्ध्वा खट्वाङ्गकोटौ कपिलमुरुजटामण्डलं पद्मयोनेः

कृत्वा दैत्योत्तमाङ्गैः स्रजमुरसि शिरःशेखरं तार्क्ष्यपक्षैः ।

पूर्णं रक्तासवौघैर्यममहिषमहाशृङ्गमादाय पाणौ

पायाद् वो वन्द्यमानः प्रलयमुदितया शङ्करः कालरात्र्या ॥ १ ॥

तैलाभ्यक्तैकवेणी[1] त्रपुमयविलसत्कुण्डलाक्रान्तकर्णा

लौहेनैकेन कृत्वा चरणनिगळनेनात्मनः पादशोभाम् ।

दिग्वासा रासभेन भ्रमति जगदिदं या जपाकर्णपूरा

मार्जन्यूर्ध्वप्रबद्धध्वजविततभुजा वेत्सि देवि त्वमेव ॥ २ ॥

संहारस्यान्तकाले नररुधिरवसासंप्लवे धूम्रधूम्रे

दंष्ट्रारौद्रे मुखेऽस्मिस्तव विशति जगद् देवि सर्वं क्षणेन ।

काली कापालिनी त्वं शवशयनरता योगिनी योगसिद्धा

वक्राप्यृज्वी च मारी मरणभयहरा त्वं शिवा चण्डखण्डा[2] ॥३॥

सङ्ग्रामे हेतिकृत्तैः सरुधिरदशनैः सद्भटानां शिरोभि-

र्मालामाबध्य नृत्यद्विततभुजलता त्वं श्मशानं प्रविष्टा ।

दृष्टा भूतैः प्रभूतैः पृथुजघनघनाबद्धनागेन्द्रकाञ्ची

शूलासिव्यग्रहस्ता रुधिरमधुमदाताम्रनेत्रा निशायाम् ॥५॥

[3]दिक्कर्युत्कृत्तकृत्तिप्रविततपटिकावेष्टितस्फिक्तटार्धा

सद्यो नारान्त्रनाडीघटितमुखमयीकुण्डलोत्कृष्टगण्डा ।

प्रत्यग्रोद्यद्भुटास्यस्रुतबहळवसामांसचर्चिक्यकाया[4]

पायात् कापालिनी मां दशनघटघटाच्छोटितप्रेतमांसा ॥ ५ ॥

---

* This stotra is taken from the Ms.No L. 1178 z 25. क and collated with the Ms. No. 1680 ख.

१. 'त्कर्णिकाक्रा' क

२. घण्टा ख

३. 'कर्तर्यु' क

४. 'चर्चिष्ककाया' क, 'चर्चिष्कृताया' ख.

कृष्ट्वा[1] पातालमूलात् क्रमकरणरणच्छुष्कशेषाहितन्त्री-
मासज्य ग्रन्थिबन्धभ्रमवलयनमत्कन्धरां खेटकेन।
कल्पान्ते भद्रकाली यममहिषमहाशृङ्गकोणप्रहारैः
पायाद् वो वादयन्ती प्रलयपरिणतब्रह्मकङ्कालवीणाम् ॥ ६ ॥

विष्वक्संहारकालज्वलदनलशिखाभास्वदुत्तुङ्गशूल-
प्रोतप्रेतान्त्रसूत्रग्रथितशवशिरःस्रक्पिनद्धोर्ध्वचूडा।
सद्यःकृत्तास्त्रमिश्रामुरुगजदितिजत्वक्पटीमादधाना
चामुण्डा चाण्डमौण्डं मटमटिति शिरश्चर्वयन्ती पुनातु ॥ ७ ॥

भद्रां रौद्रीमसह्यां नरपिशितमुखीं त्वामपूर्वामुदीक्ष्य
भ्रान्ता भीताश्च सद्यस्तरलतरदृशो मातरस्त्वां नमन्ति।
शक्राद्याः संस्तुवन्ति प्रतिदिनमसकृत् श्यामलाङ्गीमलङ्घ्यां
त्वामेव प्रेतनाथः प्रणमति सभयं भद्रकालि प्रवेपन् ॥ ८ ॥

वामे कर्णे मृगाङ्कं ग्रहगणखचितं दक्षिणे सूर्यबिम्बं
कण्ठे नक्षत्रहारं पटुविकटजटाजूटके केतुमालाम्।
स्कन्धे बद्धोरगेन्द्रध्वजनिकषयुतब्रह्मकङ्कालहारं
संहारे धारयन्ती मम हरतु भयं भद्रिका भद्रकाली ॥ ९ ॥

मारीद्रोहमसूरिकाभयहरं वेतालभूतापहं
चोरव्याघ्रमहोरगादिविषमक्षुद्रज्वरोत्सादनम्।
[2]श्रीसौभाग्यसुखावहं सुखमुखोदर्कं सुरक्षाप्रदं
तन्मार्यष्टकमेतदिष्टफलदं स्तोत्रं त्रिसन्ध्यं जपेत् ॥ १० ॥

—:o:—

१. 'कषण' ख २. 'लक्ष्मीसौख्यसुखा'

*Trivandrum Sanskrit Series*

**Awaiting Publication**

1. Bhojana Kutūhala (Dietetics) of Raghunātha, Part II
2. Sarasvatīkaṇṭhābharaṇa (Grammar) of Bhoja with the commantary Hṛdayahāriṇī by Daṇḍanāthanārāyaṇa, Part V
3. Prakriyāsarvasva (Grammar) by Nārāyaṇabhaṭṭa, Part V
4. Mīmāṁsā ślokavārtika of Kumārilabhaṭṭa with the commentary Kāśikā by Sucaritamiśra Part IV

**Ready for the Press**

1. Śukasandeśa of Lakṣmīdāsa with the commentaries Vilāsinī of Mānaveda and Cintātilakam of Gaurīdāsa
2. Kṛṣṇīya (Jyotiṣa) by Kṛṣṇācārya with the commentary Caturasundarī by Viṣṇu
3. Mānavikramamahīpālacarita (Campu) by Vedāntarāmānuja
4. Lakṣmīkalyāṇa (Nāṭaka) by Sadāśivadīkṣita

VALSA PRINTERS, TRIVANDRUM-14